११. इन्द्राय हि द्यौरसुरो अनम्नतेति शिल्पद्वचमतिच्छन्दसः षष्ठे ऽहनीति (२८.५) श्रुतेः।

१२. आ नः स्तुत इत्येवमादिकं सूक्तम्। आ सत्यो यातु मघवाँ ऋजीषीति सूक्तं षष्ठे ऽहनि।

१३. तदिति सर्वनाम्ना अनन्तरस्य नियमः। तेन आ सत्यो यात्वित्यहीनसूक्तं भवति। अहीनसूक्तमिति च शास्त्रसंव्यवहारार्थं संज्ञाकरणम्।

१४. दशरात्रस्य मध्यमे त्र्यहे चतुर्थपंचमषष्ठेष्वहस्सु होत्रकाणां यानि द्वचानि तानि शिल्पानीत्याचक्षते याज्ञिकाः। आख्यातवचनं संज्ञार्थम्। अथैतानि शिल्पानि मध्यमे त्र्यहे शस्यन्ते। तथा तानि वै द्वचानि भवन्तीति (२८.५) श्रुतेः।

१५. प्रदेशो ऽतिदेशः। [1]अन्यत्रोपदिष्टस्यान्यत्र वचनं। तस्मिन्प्रदेशे सति यदन्यत्स्तोत्रियानुरूपाभ्यां द्वचेभ्यश्च तद्भवतीति विधात्। शस्त्रप्रदेशो ऽनन्तरमेवोदाहरणमस्य।

१६. प्रथमद्वितीययोरह्नोर्यच्छस्त्रं होत्रकाणां तदेकीकृतं प्रथमे छन्दोमे भवति। यदन्यत् स्तोत्रियानुरूपाभ्यां द्वचेभ्यश्चेति पञ्चपञ्च सूक्तानि मैत्रावरुणः शंसति सर्वेषु छन्दोमेष्विति श्रुतेः।

१७. सर्वेषामिति वर्तते। तृतीयपञ्चमयोरह्नोः[2] सर्वेषां होत्रकाणामात्मीयमात्मीयं शस्त्रं स्तोत्रियानुरूपद्वचवर्जितं तन्मध्यमे यथास्थं भवति।

---

१ C D अन्यत्रोपदेशस्या॰। २ From सर्वेषाम् to अह्नोः om. in A.

१८. सर्वेषां स्तोत्रकाणां[१] चतुर्थषष्ठयोरह्नोः शस्त्रं तदुत्तमे छन्दोमे यथास्वं[२] भवति।

१९. त्वं महाँ इन्द्र तुभ्यं ह क्षा इत्येतत्सूक्तं मैत्रावरुणस्याहीनसूक्तस्थाने भवति। यत्र यस्मिन्नहनि होताहीनसूक्तं शंसेत्। तद्यथा। नवमे ऽहनि विषुवन्महाव्रतयोश्च। यद्यपि च चतुर्विंशे ऽभिजिति विषुवति विश्वजिति महाव्रतीये ऽहनीति श्रुतेस्तथाप्यविरोधः अहीनसूक्तानि शस्त्रैकाहिकानि शंसन्तीति श्रुतेः।

२०. त्वेह यत्पितरश्चिन्न इन्द्रेत्येता एकविंशतिर्चश्छन्दोमेषु त्रिष्वपि पुरस्तात्पर्यासस्य मैत्रावरुणः शंसेत्।

२१. मा चिदन्यद्वि शंसतेति स्तोत्रियः प्रगाथः। मा भेम मा श्रमिष्मेत्यनुरूपः प्रगाथः। एतौ दशमे ऽहन्यस्य मैत्रावरुणस्य भवतः। अस्येति वचनात् स्वयोनौ रथन्तरक्रियायां वामदेव्यमेवास्य भवति।

२२. आ धूर्ष्वस्मै दधाताश्वानिति चास्य मैत्रावरुणस्य द्विपदा भवति।

---

४.

१. उक्तं दशानामह्नां मैत्रावरुणस्य माध्यन्दिनमनन्तरं ब्राह्मणाच्छंसिन उच्यते। कं नव्यो अतसीनामित्ययं प्रगाथो ब्राह्मणाच्छंसिनो माध्यन्दिनेष्वनुरूपादनन्तरो नान्यस्थानेन न हिन्छन्दो-

---

१ M om. सर्वेषां स्तोत्रकाणां। २ A C D om. छन्दोमे, M om. यथास्वं।

मेषु । कद्दानिति तस्य संज्ञा । ऐकाहिकस्य स्थान इत्यैकाहिक-निवृत्त्यर्थं वचनम् ।

२. ब्रह्मणा ते ब्रह्मयुजा युनज्मीत्युक्थमुखीया भवति । चशब्दा-दनन्तरमेव । तत इयमपि तद्विशिष्यते । छन्दोमेषु यदार्षेये सूक्ते तदार्षेये उक्थमुखीये इतरयोरिति (२८.४) श्रुतेः । तृतीयमेव युक्ता वचनाच्च ।

३. उद् ब्रह्माण्यैरत श्रवस्येत्यहरहः पर्यास एव भवति । छन्दो-मेषु तद्विशिष्यते । सदैवास्य पर्यासत्वे[1] विनियोगत्वात् ।

४. वयं घ त्वा सुतावन्तः क ईं वेद सुते सचेति स्तोत्रियानु-रूपौ तृतीये ऽहनि भवतः ।

५. पूर्वोक्तावेव स्तोत्रियानुरूपौ प्रथमद्वितीययोश्छन्दोमयोः ।

६. तुशब्दो विशेषार्थः । सो ऽयं विशेषः । मध्यमे छन्दोमे पूर्वोक्तावेव स्तोत्रियानुरूपौ विपर्यस्तौ भवतः ।

७. यदिन्द्र प्रागपागुदगिति वा स्तोत्रियः प्रगाथः । औपरिष्टो[2] ऽनुरूपः । एतौ वा स्तोत्रियानुरूपौ प्रगाथौ मध्यमे छन्दोमे भवतः[3] । स्तोत्रियानुरूपौ प्रगाथाविति स्तोत्रियानुरूपग्रहणमविपर्यासार्थम्[4] ।

८. अध्वर्यवो भरतेन्द्राय सोममित्येता एकादश शंसेत् तृतीये पार्ष्ठिके ऽहनि[5] । तृतीयवचनादयं[6] विधिर्मध्यमे छन्दोमे न भवति । पूर्व एव तु भवति ।

---

१ C (orig.) D पर्यासे, A °योगात् । २ A अपरि° M अपरिष्टा° D om. ३ C om. मध्यमे छन्दोमे भवतः D om. the whole passage. ४ C विपर्ययार्थं, M विपर्यंसार्थम् । ५ C D om. पार्ष्ठिके ऽहनि । ६ C D तृतीयवचनाद्,

९. विश्वाः पृतना अभिभूतरं नरमिति चतुर्थे ऽहनि स्तोत्रियः कार्यः।

१०. तमिन्द्रं जोहवीमि मघवानमुग्रं मत्स्वपायि ते महः अस्माअस्मा इदन्धस इति संहार्यौ ऽनुरूपः।

११. कदा वसो स्तोत्रं हर्यत आ यो वाचा विवाचो मृध्र-वाचः। एतौ त्रिष्टुप्तृचौ भवतः।

१२. य एक इद्धव्यश्चर्षणीनामित्येतत्सूक्तं चतुर्थे ऽहनि।

१३. इन्द्रो मदाय वावृधे मदेमदे हि नो ददिरित्येतौ स्तोत्रियानुरूपौ पञ्चमे ऽहनि भवतः।

१४. आ याहि कृणवाम ते। यो न इन्द्राभितो जन इत्येतौ त्रिष्टुप्तृचौ पञ्चमे ऽहनि भवतः।

१५. यस्तिग्मशृङ्गो वृषभो न भीम इत्येतत् स्तोत्रियादारभ्य पञ्चमे ऽहनि भवति।

१६. सुरूपकृत्नुमूतय इत्येतौ स्तोत्रियानुरूपौ षष्ठे ऽहनि भवतः।

१७. त्वया वयं मघवन्पूर्व्ये धन इत्येतत् त्रिष्टुप्तृचं षष्ठे ऽहनि भवति।

१८. अस्मा इदु प्र तवसे तुरायेति सूक्तमित्येतत् सुरूप-कृत्नुमूतय इत्यत आरभ्य षष्ठे ऽहनि भवति।

१९. तदेतदस्मा इदु प्र तवस इत्युक्तम्।

२०. आ घ त्वा इव सूर्यं प्रग्ध्व मित्येतौ स्तोत्रियानुरूपौ प्रगाथा उत्तमे छन्दोमे। यत्प्रथमयोरह्नोः प्रस्थं[1] तत्र समानम्।

---

१ A प्रस्थमित्यादि।

२१. त्वं महाँ इन्द्र यो ह शुष्मैरित्येतत्सूक्तमहीनसूक्तस्य[1] स्थाने प्रयुज्यते।

२२. इन्द्रं स्तवा नृतमं यस्य मह्नेत्येतत् सूक्तं त्रिष्वपि छन्दोमेषु पुरस्तात्पर्यासस्य भवति।

२३. उदु त्ये मधुमत्तमाः उदिन्न्वस्य रिच्यत इत्येतौ स्तोत्रियानुरूपौ प्रगाथौ द्वयमे ऽहनि क्रियेते।

२४. त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म इत्ययं वा स्तोत्रियो द्वयमे ऽहनि ब्राह्मणाच्छंसिनो भवति।

२५. उत्तमा च त्रिकद्रुकीयस्य। तमिन्द्रं जोहवीमि मघवानमुग्रं। विश्वाः पृतना अभिभूतरं नरमित्येष संशार्थो ऽनुरूपः।

२६. रायस्कामो वज्रहस्तं सुदक्षिणमित्येषा। द्विपदायच्छ्णाखोन्यनुशंसनयोग्यत्वे ऽपि वापरा प्रक्षेप्तव्या।

---

५.

१. कदू न्वस्याकृतमित्ययं कद्वान्प्रगाथो ऽच्छावाकस्यानुरूपादनन्तरो भवति। अच्छावाकाधिकारो ऽन्तरेण प्रायणीयोदयनीयाविति यावत्।

२. उरुं नो लोकमनु नेषि विद्वानित्युक्थमुखीया भवति।

३. अभि तष्टेव दीधया मनीषामित्यहरहः पर्यासः।

४. त्वामिद्धि ह्वो नरो वयमेनमिदा ह्य इत्येतौ स्तोत्रियानुरूपौ प्रगाथौ भवतः।

---

१ M °रित्येतस्थानं। च°।

५. अपूर्व्या पुरुतमान्यस्मा इति सूक्तं द्वितीये ऽहन्येतच्छस्त्रम्।

६. तरणिरित्सिषासतीति स्तोत्रियः। तरोभिर्वो विदद्वसु-मित्यनुरूपः।

७. य ओजिष्ठ इन्द्र तं सु नो दा इत्येतत्सूक्तं यथोक्तेन शस्त्रेण सह तृतीये ऽहनि भवति।

८. यो राजा चर्षणीनामिति स्तोत्रियः। नकिष्टं कर्मणा नशदित्यनुरूपः।

९. सचायोरिन्द्रश्चर्कृष इति तृचः। इन्द्र सोममिमं पिबेति तृचः। एतौ त्रिकपतृचौ।

१०. सं च त्वे जग्मुर्गिर इन्द्र पूर्वीरित्येतत्सूक्तं चतुर्थे ऽहनि पूर्वोक्तेन स्तोत्रियादिना सह भवति।

११. स्वादोरित्था विषूवत इति स्तोत्रियः। इत्था हि सोम इन्मद इत्यनुरूपः।

१२. यच्चिद्धि सत्य सोमपा इति तृचः। अव यच्चं शतक्रत-विति तृचः। एतौ त्रिकपतृचौ।

१३. कदा भुवन्नथक्षयाणि ब्रह्मेति पञ्चमे ऽहनि भवति।

१४. उभे यदिन्द्र रोदसी इत्येतौ आश्वलायनमतेन स्तोत्रियानु-रूपौ भवतः। उभे यदिन्द्रेति स्तोत्रिय उत्तरो ऽनुरूप इत्येवं मोक्तम्। कथं नाम छन्दोगानां स्तोत्रियक्रमान्यत्वे तथैव शस्त्रा शेषो ऽनुरूपः स्यादिति।

१५. विद्युष्टे अस्य वीर्यस्य पूरव इत्येतास्तिस्रः त्रिकपम्।

१६. शासदह्निर्दुहितुर्नप्त्यं गादित्येतत्सूक्तं च शिल्पं षष्ठे ऽहनि भवति[१]।

१७. शासदह्निरित्येतत्।

१८. नकिष्टं कर्मणा नशदिति स्तोत्रियः। न त्वा बृहन्तो अद्रय इत्यनुरूपः। एतौ प्रथमे छन्दोमे भवतः।

१९. उभयं शृणवच्चन इति स्तोत्रियानुरूपौ मध्यमे छन्दोमे भवतः।

२०. यत इन्द्र भयामहे इति स्तोत्रियानुरूपौ उत्तमे छन्दोमे भवतः।

२१. त्रिष्वपि छन्दोमेषु यथोक्ताः।

२२. इच्छन्ति त्वा सोम्यासः सखाय इत्येतत्सूक्तं त्रिष्वपि छन्दोमेषु पुरस्तात्पर्यासस्य भवति।

२३. अया वाजं देवहितं सनेमेत्येषा द्विपदा दशमे ऽहनि भवति।

२४. ऐकाहिकमाग्निष्टोमिकं भूय इद्वावृध इत्येतत् पूर्वं द्वयो-रैकाहिकयोः। षष्ठाद्ध्याद्द्विपदाया अनन्तरं प्राक् पर्यासात्।

---

## ६.

१. कुर्यादिति वाक्यशेषः। सर्वे चकाराः साहचर्यसमुच्चयार्थाः।

२. अन्तरेणोक्थमुखीयां[२] प्रतिष्ठोचकं सूक्तं च प्रक्षेपः पर्यास-स्यावापस्य स्थानम्।

---

१ A सूक्तं शिल्पं च। २ C D M om.

३. होत्रकाधिकारो[1] ऽनुवर्तते। पृष्ठ्याद्धोत्रकविधिनात् सूक्तानि माध्यन्दिने सवने ऽभिप्लवे ऽतिदिश्यन्ते। अभिप्लवः षळहः पृष्ठ्यविकार इत्येतत्तु होतुरुक्तं। तेनेह न सिध्यति। यदन्यत् स्तोत्रियानुरूपाभ्यां तृचेभ्यश्च तत्प्रदेशे प्रतीयेतेति परिभाषणमिहापि समानं। सूक्तग्रहणात् प्रातःसवने पार्ष्टिकाणां स्तोत्रियानुरूपाणां धिष्ण्याच्छावोन्नये ऽप्येवमेव।

४. यान्यहीनसूक्तानि संज्ञाविशिष्टानि षष्ठे ऽभिहितानि तेषां स्थाने द्वितीयादह्नः सूक्तानि भवन्ति।

५. शंसा महाँ यस्य इन्द्र इति द्वयोर्यदुत्तरं तन्मैत्रावरुणस्याहीनसूक्तस्थाने भवति।

६. प्रथमात्पृष्ठ्यात्पार्ष्टिकात् स्वरसामसु होत्रकाणां शस्त्रं भवति।

७. चतुर्विंशादिषु षष्ठात्[2] शस्त्रं भवति पूर्वसूत्रयोरुपादानं प्रथममधिकरणमुत्तरम्। इह तु तद्विपरीतं क्रियते कार्यार्थं तत्त्वेतत्कार्थं। प्रातःसवने न षष्ठात् स्तोत्रियाः।

८. इत उत्तरं यदुच्यते तद्विश्वजिति सर्वपृष्ठे भवति। परोक्षपृष्ठे ऽपि वक्ष्यमाणं भवत्येवोद्धृत्य वाजपेया इति लिङ्गवदुपदेशात्। उपाक्तपृष्ठानि प्रयुज्यन्ते। तत्राप्येतद्भवति।

९. शंसतीति वाक्यशेषः।

१०. ब्राह्मणाच्छंसी वैरूपस्य स्तोत्रियानुरूपौ कद्वतं च प्रगाथं शंसति।

---

१ C D होत्रधिकारो।

२ C D षष्ठं instead of षष्ठात् श०, M षष्ठात्।

११. रैवतीसंज्ञिकानां यौ स्तोत्रियानुरूपौ तावच्छावाकः कद्वन्तं च शंसति।

१२. वालखिल्या अभि प्र वः सुराधसमित्यारभ्य षट् सूक्तानि इन्द्र नेदीय एदिहीतीन्द्रमित्थं प्रगाथं[1] परिहाप्या नो विश्वे सजोषस इति च प्रगाथं परिहाप्य शेषा अविहृता मैत्रावरुणः शंसति। इह विहारप्रतिषेधादन्यत्र विहृतानामेव शंसनम्।

१३. वृषाकपिं वि हि सोतोरसृक्षतेत्येतदृते कुन्तापेनेत्यर्थः[2]। ऋते कुन्तापमिति च ब्रुवन् वृषाकपेः सर्वत्र कुन्तापसाहचर्यं दर्शयति ततो यत्र वृषाकपेरङ्गारस्तत्र कुन्तापस्यापि भवति। अन्यूङ्ख-मिति च ब्रुवन् वृषाकपेर्नित्यं न्यूङ्खं दर्शयति। एवंलक्षणं ब्राह्मणा-च्छंसी शंसति।

१४. यौर्न य इन्द्राभि भूमार्य इति विष्णुन्यङ्गाख्यमच्छावाक एवथामरुतः स्थाने शंसति।

१५. अभूरेको रयिपते रयीणामिति सामसूक्ताख्यं मैत्रा-वरुणस्य भवति।

१६. यो जात एव प्रथमो मनस्वानित्येतत्सूक्तं ब्राह्मणाच्छंसिनः सामसूक्ताख्यं शस्त्रं भवति।

१७. प्र घा न्वस्य महतो महानीति सामसूक्ताख्यमच्छावाकस्य शस्त्रं भवति।

---

१ C D M om. प्रगाथं।

२ A °त्येतत् ऋते कुन्ताप विना इदं जना इत्यनेनेत्यर्थः। ऋते°

१८. [1]साममूक्तादनन्तरमहीनमूक्तानां शंसनं कृत्वा ततो होत्रका ऐकाहिकीभिर्ऋग्भिः परिदधति। या एकाहे परिधानीयास्ताभिः परिधानं कुर्वन्तीत्यर्थः।

१९. एकाहभूतस्य विश्वजितः सर्वपृष्ठस्यैकाहिकान्पर्यासान् सकलानेवोर्ध्वमहीनसूक्तेभ्यः शंसेयुः।

---

७.

१. विश्वजिदधिकारो ऽनुवर्तते। विश्वजित्युक्थेषु क्रियमाणेषु माध्यन्दिने सवने वालखिल्या वृषाकपिं विष्णुन्यङ्गमित्येतदुद्धृत्य यथोक्तान्परिशेषान्माध्यन्दिने सवने होत्रकाः शंसन्ति।

२. विश्वजिति[2] षष्ठादह्न उक्थानि भवन्ति।

३. प्रदेशान्तरार्था अपि परिभाषेयं। तदर्थो ऽथशब्दो विशेषाधिकारार्थः। यदिशब्दो ऽपि तृतीयसवनातिदेश एवेत्येतत् ज्ञापयितुं नाङ्कः पृष्ठ्याहान्यनुपूर्वमित्यादौ (१४. ६ ८. २)। षष्ठाह्निकं तृतीयसवनं असर्वपृष्ठे ऽहनि अन्यस्मिन्नहनि प्रदिष्टं। तद्यथा वाजपेये पुरुषमेधे गर्गत्रिरात्रे पञ्चरात्रादिषु द्वितीयादह्न उक्थानि भवन्ति।

४. परोक्षपृष्ठे विश्वजिति प्रतिशिल्पानि वक्ष्यमाणानि क्रियन्ते।

५. शंसतीति मैत्रावरुणस्य प्रतिशिल्पक्रियोच्यते[3]। उद्धृत्य वालखिल्याः पिबा सुतस्य रसिन इत्यैन्द्रान् प्रगाथाञ्छंसति। यावत्य

---

[1] M सूक्तशंसनाद०। [2] C D विश्वजिदिति। [3] C D ०शिल्पं।

षड्विंशन्ते प्रगाथर्चो ऽपि तावत्यः प्रतिशिल्पवचनात्। ततो माध्य-न्दिने सवने षड्विंशतिं प्रगाथाञ्छंसति। तृतीयसवने चतुस्त्रिंश-च्छतम्[1] तत्परिमाणत्वात्। पिबा सुतस्य रसिन इति पञ्च। यदिन्द्र प्रागपागुदगिति सप्त। वास्तोष्पते ध्रुवा स्थूणेत्येकः। उभयं शृणव-च्चन इति नव। नरोभिर्वः सप्त। यो राजा चर्षणीनामिति चत्वः[1]। विश्वेत्ता विष्णुरित्येकः। बार्हताः प्रगाथाः प्रतिशिल्पत्वात्।

६. वृषाकपिं सकुन्तापमुद्धृत्य वृषाकपिसंमिता एव न्यूङ्ख-वर्जिता इन्द्रो मदायेत्येवमाद्याः पङ्क्तीरैन्द्रीः शंसति[2]। इन्द्रो मदा-येति चतुर्दश स्वादोरित्थेति तिस्रः अस्माकमिन्द्रेहि न इत्येका अस्मा इत्काव्यं वच इत्येका प्रो अस्मा उपस्तुतिमिति षट् उत्सात-मिन्द्र ते शव इति तिस्रः आ तू सुशिप्र दंपते कन्या वारवाय-तीति द्वे नकिर्देवा मिनीमसीति च नूनं तं नव्यमिति च। उत्तमा या पङ्क्तिरिति व्यपदेशात्।

७. अच्छावाकस्तु प्रतिशिल्पक्रियायां विष्णुन्यङ्कमेव शंसति।

८. इति यदुक्तमेतत्परोक्षपृष्ठे भवति।

---

८.

१. अथानन्तरं विश्वजित्कल्पे यो विधिः स उच्यते।

२. ऐकाहिकाञ्प्रगाथाञ्छस्त्वा ततो ऽनन्तरं मैत्रावरुणो वालखिल्याः शंसति। ब्राह्मणाच्छंसी वृषाकपिं। अच्छावाको

---

१ C चतुर्॰।　　२ C (orig.) D तिस्रः।

३ C (orig.) D om. the text from वृषाकपिं to शंसति।

विष्णुन्यङ्गमिति। होता नाभानेदिष्ठं। ऐकाहिकवचनमग्निष्टोमस्येव विश्वजितो ऽधिकारार्थं। यद्यपि श्रुतौ स्तोत्रियानुरूपौ प्रगाथा वालखिल्याः शंसतीत्युक्तं तथापि पूर्वकालमात्रं तद्विश्वजित्प्रकारादूर्ध्वं प्रगाथेभ्यः शिल्पविधानं। अहर्गणे चोर्ध्वमुक्थमुखीयायाः परिभाषितत्वात्। हचाम्ना वालखिल्यादीन् शंसेत्।

३. हचपचे वालखिल्यानां चतुर्थ्यं भवति।

४. प्रत्येकं सामसूक्तादीनां चयस्त्रयस्तृचास्तदर्थां वीप्सा। होचका विश्वजिति सामसूक्तादीनां[1] त्रींस्त्रींस्तृचान् शंसन्ति। होत्रकाधिकारे पुनर्होत्रकग्रहणं होतुर्नाभानेदिष्ठार्थम्[2]।

५. य एव विश्वजिति त्रींस्त्रींस्तृचान् होत्रकाः शंसन्ति सामसूक्तानां यथायथं हचशंसनेन त्रयस्तृचा एवमहीनसूक्तानां पर्यासानामित्येष विकारो नियमतः। उत्तरस्तु विकल्पेन। विश्वजिच्छिल्पग्रहणं होतुरपि यथा स्यात्।

६. येषु निविद्धीयते तान्निविद्धानीयांस्तृचान् होता शंसेत्। आ यद्दुवस्याद् दुवसे न कारुरिति[3] अनुत्तमा ते मघवन् नकिर्न्विर्त्येका कयाशुभीया एवं हचः क्रियते। अनुत्तमा न इति परिधानीयोत्तराः पूर्वाः प्रस्ता यचास्मिन् धीयते निविदित्यविशेषेणोक्तत्वात्।

७. युवोर्यदि सख्यायास्मे इति नाभानेदिष्ठस्य तृचस्तृचोदितः सो ऽयमेव कर्तव्यो निविद्धानीय इति।

---

१ A साम॰ C सम॰। २ A ॰दिष्ठशार्थम्। ३ C D ins. है।

८. ये यज्ञेन दक्षिणया समक्ता इत्येतत्सूक्तं नियमतो न तृचः। युवोर्यदीत्येकां[1] शस्त्वा तत एतत्सूक्तं ततः परिशिष्टे शंसति ।

९. स्वस्ति नो मिमीतामश्विना भग इत्येतत्तृचं[2] सामूळ्हके वैमूळ्हके वा तृतीयसवने निविद्धानीयं कर्तव्यम्। तृचवचनं विकल्पबाधनार्थं क्रियते ।

१०. प्र वो मह इत्येवयामरुत्तृचं शंसेत् । चकारो मारुतान्तरेण सह[3] समुच्चयार्थः ।

११. प्रातःसवने यदुक्तं विश्वजित इतरेषां पञ्चानां स्तोत्रिया-ऽऽकंसन्ति तस्यापवादः। यथास्तोमं छन्दोगवशेन होतृहोत्रकाणां च प्रातःसवनं भवति। पञ्चात्प्रातःसवनस्य वचनं विकल्पनिवृत्त्यर्थम् ।

---

## ९.

१. होत्रकाधिकारोऽनुवर्तते। तत आग्न्याधेयिकं तृचकॢप्तमिह न भवति। त्रिवृद्दशरात्रस्य विधिं वक्ष्याम इति वाक्यशेषः। तृचकॢप्तं शस्त्रं भवति वक्ष्यमाणेन विधिना ।

२. निविद्धानवचनसामर्थ्यादौ परिशिष्टसूत्रे[4] होता होत्रकाश्च आद्यानामाद्यांस्तृचान् शंसेयुः ।

३. निविद्धानानां सूक्तानामुत्तमांस्तृचान् होता शंसेत् ।

४. यानीतराणि निविद्धानव्यतिरेकेण सूक्तानि तेषामेकैकां शंसेयुः शिल्पतृचानां च ।

---

१ M युवोर्यदीति तृचस्यैकां ; om. तत एतत्सूक्तं। २ M inserts नियमतः।
३ C D om. सह। ४ A C D परिशि॰।

५. षष्ठस्याह्नः समानं विश्वजिच्छिल्पेन शंसं शिल्पानाम्। षष्ठग्रहणादन्यत्रापि षष्ठे ऽहन्यग्निष्टोमसंस्थे शिल्पानामेव भावार्थे[1] आरम्भः। सर्पसत्रे दशरात्रे चाहीने ऽदशरात्रे ऽपि षष्ठे तुग्र-ह्वात्पृष्ठशिल्पावियोगो न्याय्यः[2]।

६. समानमेव विश्वजिच्छिल्पेन शौचत्वादारम्भः[3]।

७. समानं विश्वजिच्छिल्पेन।

८. यदि पूर्वकारिणो गवामयने ब्राह्मणाच्छंसिने तदीयाय शस्त्राय प्राग्विषुवत ऐन्द्रेषु प्रगाथेषु अभीवर्ताख्यमन्वायातयेयुस्ततो ब्राह्मणाच्छंसिनो यो विशेषः स उच्यते। यस्मिन् स्तुवते छन्दोगाः स एव स्तोत्रियः कार्यः स्तोत्रियो ऽनुरूपः कार्यः[4]। न पृष्ठे[5] ऽन्वायातनं तत्र स्तोत्रियानुरूपाणां प्रत्यक्षशिष्टत्वात्। एकाद्शविंश-तेरेवाह्नामन्वायातनम् तत्र चतुरुत्तरं शतं प्रगाथानामैन्द्राः[6] बार्हताः प्रगाथा दाशतयीष्विति छन्दोगानां।

त्वमङ्गेकस्तत[7] सप्त त्वुत्वामिद्धि हवामहे।
चयोदश च मो षु त्वा तृतीयां त्वत उद्धरेत्॥
उदु त्यद्दर्शतं त्वेको द्वौ तु मा चिदिति स्मृतौ।
पिबा सुतस्येति दश यदिन्द्र प्रागपागष्ट॥
वास्तोष्पते ध्रुवेत्येको न हि ते शूर चापरः।
न भागे[8] द्वितीये तु तरोभिर्वो विदद्वसु॥

---

५. १ A सर्वभावार्थे। २ C D न्याय्यः। ३ A शौचत्वाद् C D शौचत्वाद् M शौच०। ४ C D कार्यः। ५ A पृष्ठे C D पृष्ठे। ६ M. प्रगाथानामैन्द्राणां विवृति। चतुः-शतदैन्द्रा०। ७ C D त्वमङ्ग प्र शंसिष इत्येकः। ८ C D भाग।

यो राजेति चयो ज्ञेया विश्वेभ्ना विष्णुरित्येकः।
तं वो दस्मं तु पञ्च स्युरा नो विश्वाखिति चथः॥
त्वामिद्धा ह्यो ऽथ चत्वारः स्वादेको बण्महानिति।
सं मा तपन्ति[१] कवयो[१] विज्ञेयाः सप्तविंशतिः॥
वालखिल्ये प्रगाथा ये षट्त्रिंशेन विवर्जिताः।
नकिः सुदास इत्येको द्वौ चापि बृहदिन्द्राय।
एवं[२] महत्वतीयेषु न हि ते विपरीतातः[३]॥
सूर्यदेवौ च विज्ञेयावुदु त्यं बण्महां असि।
सर्व एते ऽपि कर्तव्या नान्यथास्ति चतुःशतम्॥
अन्यशाखाश्रयाभावा छान्दोग्ये गणना भवेत्।
अथर्ववेदे त्वपरे ज्ञेयाः पञ्चदशाधिकाः॥

९. एतदपि परमतमेव। यदिवाशब्दात् 'कदाचिच्छन्दोगा गवामयने तत्प्रकृतिषु च संवत्सरसत्त्रेषु प्राग्विषुवतः षट्प्रगाथेनेयुः। द्वादशभिरेतव्यमिति[५] च्छन्दोगानां वचनम्। तस्मिन्पक्षे वक्ष्यमाणाः षट्प्रगाथा अन्ये संप्रयोक्तव्याः[६]।

१०. यदि गवामयन इत्यस्मिन्नपि कल्पे तृतीये ऽहनि बृहत्यो भवन्ति। विकल्पार्थं सूत्रम्। न चात्र श्वःस्तोत्रियक्रिया। बृहत्य एवानुरूपः। एवं सति पृष्ठस्यापि विकल्पेनाम्नायातनम्। नित्यमभिप्लवे[७] ऽम्नायातनम्। तृतीये ऽहनि बृहतीविकल्पः।

---

१ C मतर्यति कवयो विज्ञेया; in marg. मा as insertion between म and त D मतर्यंति कवयो वि०। २ A कवये। ३ C D एव। ४ C D परितांतः। ५ C D एतव्यमिति। ६ M कल्पान्ते प्रयोक्तव्याः। ७ C D अभिप्लवेन।

चतुर्विंशे ऽभिजिति स्वरसामसु नित्यमन्वायातनम्। न प्रायणीये। प्रायणीयमतिरात्रमुपेत्येति सूत्रातिरेकात् (११. १८. ७) न च्छन्दोमेषु प्रदेशे तु नित्यमेव च।

११. तं वो दस्ममृतीषहमिति स्तोत्रियः प्रगाथः। तत्त्वा यामि सुवीर्यमित्यनुरूपः। अभि प्र वः सुराधसमिति स्तोत्रियः प्रगाथः। प्र सु श्रुतं सुराधसमित्यनुरूपः। आ त्वा सहस्रमा शत-मिति स्तोत्रियः प्रगाथः। आ मन्द्रैरिन्द्र हरिभिरित्यनुरूपः। यो राजा चर्षणीनामिति स्तोत्रियः प्रगाथः। नकिष्टं कर्मणा नश-दित्यनुरूपः। न त्वा बृहन्तो अद्रय इति स्तोत्रियः प्रगाथः। त्वमिन्द्र यशा असीत्यनुरूपः। त्वमिन्द्र प्रतूर्तिष्विति स्तोत्रियः प्रगाथः। पिबा सुतस्य रसिन इत्यनुरूपः। षडेते प्रगाथाः।

१२. विषुवति यदि च्छन्दोगा आदित्यव्रताख्यं साम कुर्युः तत उत्तमे स्वरसाम्नि विषुवतः स्तोत्रियानुरूपः कर्तव्यः।

१३. चित्रं देवानामुदगादनीकमिति स्तोत्रियः। उत्तरे चोत्सूर्यो बृहदर्चींष्यैति तृतीयानुरूपस्येति (११. १३. २५. २६) तत् पूर्ववत् द्रष्टव्यमविशेषात्।

१४. विषुवति। ब्राह्मणाच्छंसिनो गवामयने यदि विकर्ण-मन्वायातयेयुः चित्रं देवानामित्यनयोरेवान्वायातयेयुः। प्रकृतत्वात्। तच्च[१] प्रस्तुतमेव शस्त्रम्।

१५. वयमद्यां अभि सूर्येति स्तोत्रियः प्रगाथः। उदु त्यद्दर्शत-मित्यनुरूपः। विकर्णस्येत्यनूच्यमाने[२] पूर्वसूत्रस्यायमर्थ इति विज्ञायते।

---

१ C D om. तच्च। २ A चानुच्य॰ C विकर्णस्य चानन्यमाने।

१६. प्रगाथग्रहणमनुवर्तते। इन्द्र क्रतुं न आ भरेत्ययं स्तोत्रियो विकर्णस्थाने॑ऽस्य चोर्ध्वं विषुवतः। भेदेनोपदेशात्। इन्द्र ज्येष्ठं न आ भरेत्यनुरूपः।

१७. पौरुमीळ्हादीनि सामानि नामविशिष्टानि यदूर्ध्वं विषुवतो ऽभीवर्तस्थाने ऽन्वायातयेयुश्छन्दोगा इन्द्र क्रतुं न आ भरेत्यचैव कुर्युः तत्रायमेव स्तोत्रियो भवति ऊर्ध्वं विषुवतः।

१०.

१. होत्रकाणामिति वर्तते। उक्तो माध्यन्दिनेषु सवनेषु विकारो होत्रकाणाम्। अथेदानीमवसरप्राप्त उक्थेषु यः प्राकृताद्विकारः स उच्यते। तार्तीयसवनिकान्युक्थ्यसंबद्धानि होत्रकशस्त्राण्युक्थान्युच्यन्ते। साकमश्वं मैत्रावरुणस्येत्येवमादिना सूत्रजातेन। तद्विषयो विकारः। विकारवचनादनुक्तं प्राकृतं। चतुर्थे ऽहनि ब्राह्मणाच्छंसिनः स्तोत्रियानुरूपौ प्रयोजनम्[१]।

२. अन्येषां आगतानां पक्षे विधानार्थं सूत्रम्। द्वितीयं नित्यवचनं नित्यपरिमाणान्येवेत्यवधारणार्थम्। तत्र प्राकृतेभ्यो ऽन्यानि वृद्धसंप्रदायानुगमादैन्द्राणि आगतानि लिख्यन्ते। एवा पतिं द्रोणसाचं सचेतसमिति मैत्रावरुणस्य द्वितीये ऽहनि वृषायस इति वृषण्वत्। तृतीये अश्वावति प्रथमो गोषु गच्छतीत्यश्वावत्। चतुर्थे अश्वान एव ब्यबाधत स्पृध इति जातवत्। पञ्चमे अनानुदो वृषभो दोधतो वध इति वृषभवत्। अष्टमे तुभ्येदमिन्द्र परि षिच्यते

१ cf. १२. १९. O Comm.

मध्विति स्वर्जितं महीति महद्वत्। नवमे एवेवापामपरे सन्तु दूढ्य
इति द्यौः क्रन्ददिति दिव इति तदमुष्य लोकस्य रूपम्। चतुर्विंशे
आदङ्गिराः प्रथमं दधिरे वय इति समविन्दन्त भोजनमिति
संवत्। प्रथमे स्वरसाम्नि यो न इन्द्राभितो जन इति वृकायुरिति
कद्वत्। द्वितीये स्वरसाम्नि उभे यदिन्द्र रोदसी इति नमौं हधीति
कद्वत्। तृतीये स्वरसाम्नि अव यत्त्वं शतक्रतो इति कद्वत्। अथ
ब्राह्मणाच्छंसिनः। ऐन्द्राणि जागतानि। प्र वः सतां ज्येष्ठतमाय
सुष्टुतिमिति तृचं द्वितीये ऽहनि हस्ते वज्रं भरतीति वज्रवत्।
तृतीये ऽहनि त्रिविष्टिधातु प्रतिमानमोजस इति त्रिवत्। चतुर्थे
यो नो दाश आर्यो वा पुरुष्टुतेति परि कुत्सादिहा गहीति परि-
वत्। पञ्चमे विश्वे ह्यस्मै यजताय धृष्णव इति वृषभायेति वृष-
भवत्। अष्टमे नाना हि त्वा हवमाना जना इम इति धिषणा
तित्विषे महीति महद्वत्। नवमे अस्य श्रवो नद्यः सप्त बिभ्रती-
त्यस्माकमंशमुदवा भरेभर इति निवृत्तिः। चतुर्विंशे प्र ते नावं
न समने वचस्युवमिति संबाधादिति संवत्। प्रथमे स्वरसाम्नि
येहान उप पृतना इति एकराळिति कद्वत्। अथाच्छावाकस्यैन्द्राणि
जागतानि। द्वितीये ऽहनि अभि त्यं मेषं पुरुहूतमृग्मियमिति
त्रयोदश तृचं यदिन्द्र शवसावधीरहिमिति वृषवत्। तृतीये त्यं सु
मेषं महया स्वर्विदमित्यष्टौ चौविदश्वामवाँ अद्रेः स्वनादिति च
पञ्च श्रवनस्यदं रथमिति रथवत्। चतुर्थे अहं भुवं वसुनः पूर्व्यस्प-
तिरित्येकादश। एता विश्वा सवना तूतुमा कृष इति द्वे। चिताय गा
अजनयमिति आतवत्। पञ्चमे ऽहं दां गृणते पूर्व्यं वस्वित्येकादश।

प्र वो महे मन्दमानायान्धस इति च द्वे स्वाहै गवामूधःस्विति षड्डमत्। सप्तमे तदस्मै नव्यमङ्गिरस्वदर्चतेत्यष्टौ। अजातशत्रुमजरा स्वर्वतीति पञ्च महिमानमातिरदित्यावत्। अष्टमे प्र ते महे विदथे शंसिषं हरी इति त्रयोदश मद इति मद्वत्। नवमे अर्चा दिवे बृहते शूष्यं वच इति नव दिवश्चिदस्य वरिमा वि पप्रथ इति चतस्रो दिव इति तदमुष्य लोकस्य रूपमिति। चतुर्विंशे न्यू षु वाचं प्र महे भरामह इत्येकादश। मा नो ऽस्मिन् मघवन् पृत्स्वंहसीति द्वे। समिन्द्र रायेति संवत्। प्रथमे स्वरसाम्नि अच्छा म इन्द्रं मतयः स्वर्विद इति नव। अभी दधामीति चतस्रः। त्वे इत्काममिति कद्वत्। द्वितीये स्वरसाम्नि स इन्महानि समिथानीति चतस्रः। एष प्र पूर्वीरिति षट्। युनज्मि ते ब्रह्मणेत्येका इमां ते धियमित्येका। महः सु वो अरमिति चैका कृणोति युध्म इति कद्वत्। तृतीये स्वरसाम्नि तमस्य द्यावापृथिवी सचेतसेति द्वे। जघान एवेति पञ्च। तव त्य इन्द्र सख्येषु वह्नय इति षट्। कृणवाम इति कद्वत्। सप्तमे ऽहनि मैत्रावरुणस्य ब्राह्मणाच्छंसिनश्चैकाहिके। तथैव च यत्नात्। पृष्ठ्ये यानि तान्येवाभिप्लवे। अभिजिद्विषुवद्विश्वजिन्महाव्रतेषु चातुर्विंशिकान्येव तद्विलोपदेशात्। पृष्ठ्याभिप्लवप्रथमयोर्दशमे चाहन्यैकाहिकानि। उत्तमे चाभिप्लविके द्वितीयात् तार्तीयकानि। यथादित्यारम्भात्। विश्वजिति सर्वपृष्ठे परोक्षपृष्ठे च नैवं[1] विद्यते। षष्ठे ऽहन्यभावात्। बृहत्पृष्ठपरोक्षपृष्ठेभ्य-

---

१ A नैव।

त्वन्यप्रकारे[1] विश्वजिति द्वितीयादेव। उक्थविकार[2] उक्थवचनात्। अन्यस्मिन्नहनि संघातमापद्यमाने आगतविशेषः। स्तोमातिशंसने प्राप्तते एतेषां त्र्यहाणामेकाहीभवतामपि[3] अहःसवनोपदेशे (१४. १. २) च सद्दीचं। तदित्यारम्भात्। शस्त्रातिदेशो[4] ऽपि यदा सद्दीचस्य प्राप्तिः।

३. उक्थेष्विति वर्तते। प्र वो वाजा अभिद्यव इति स्तोत्रियः। प्र वः सखायो अग्नय इत्यनुरूपः। गायत्रीषु मैत्रावरुणाय प्रणयन्तीति श्रुतेः। अनुरूपादनन्तरमेवा पतिं द्रोणसाचं सचेतसमिति तृचः।

४. प्र सम्राजे बृहदर्चा गभीरमिति सूक्तं। इन्द्रा को वां वरुणा सुम्नमापेति च। मैत्रावरुणग्रहणमितरयोर्निवृत्त्यर्थं। अहनि द्वितीय इति नियमार्थम्।

५. आ वां राजानावध्वरे ववृत्यामित्ययं पर्यासस्तृतीयपञ्चमयोरह्नोर्मध्यमे च च्छन्दोमे। न तु द्वितीये ऽहनि सूक्तं क्रमभेदात्।

६. मैत्रावरुणस्येत्यनुवर्तते[5]। पुनीषे वामरक्षसं मनीषामिति पर्यास इतरेष्वहःसु द्वितीयचतुर्थषष्ठसप्तमनवमेषु।

७. ककुप्सु मैत्रावरुणाय प्रणयन्ति तृतीये ऽहनीति श्रुतेः। अनुरूपादनन्तरो अश्वावति प्रथमो गोषु गच्छतीति तृचः।

८. धीरा त्वस्य महिना जनूंषीति सूक्तम्। इन्द्रावरुणा युवमध्वराय न इति च [6]तृतीये ऽहनि।

---

[1] M ॰न्यत्प्र॰ C D ॰त्वन्यप्रकारवि। [2] M उक्थाधिकारे उक्थव। [3] A ऐकाहिकीमें भवति तामपि C D ऐकाहिकीमें भवतामपि चाहः। सवनी (D चाहः सव॰)। [4] A शस्त्रातिरेशो C शस्त्रातिदेशो D शस्त्रापि देशो। [5] om. in C D M. [6] A ins. ततः पर्यास इति।

९. गायत्रीषु मैत्रावरुणाय प्रणयन्ति चतुर्थे ऽहन्निति श्रुतेः। अनुरूपादनन्तरो जज्ञान एव व्यबाधत स्पृध इति तृचः।

१०. इदत्यथो वरुणः सूर्यायेति सूक्तम्। अष्टौ वा यत्र उद्यतः सजोषा इति च। ततः पर्यास इति चतुर्थे ऽहनि।

११. आ ते अग्न इधीमहीत्येका। सो अग्निर्यो वसुरित्येका। अग्निं तं मन्ये यो वसुरित्येका[1]। अयं क्रमः स्तोत्रियः।

१२. आ ते अग्न ऋचा हविरित्यनुरूपः। पङ्क्तिषु मैत्रावरुणाय प्रणयन्ति पञ्चमे ऽहन्निति (३०. ३) श्रुतेः। अनुरूपादनन्तरो अनानुदो वृषभो दोधतो वध इति तृचः।

१३. प्र शुन्ध्युवं वरुणाय प्रेष्ठां इन्द्रावरुणा युवमध्वराय नः। ततः पर्यास इति पञ्चमे ऽहनि।

---

११.

१. द्विपदाः षष्ठे स्तोत्रियानुरूपतया सर्वेषां होत्रकाणां न केवलं मैत्रावरुणस्य।

२. अग्ने त्वं नो अन्तम इति स्तोत्रियो द्वैपदस्तृचो भवति मैत्रावरुणस्य।

३. आम्नायक्रमेण या चतुर्थी तां तृतीयां करोति।

४. अग्ने भव सुषमिधा समिद्ध इत्ययमनुरूपो भवति।

५. वालखिल्या ऋचो ऽभि प्र वः सुराधसमित्यष्टौ सूक्तानि।

---

[1] M inserts इति।

तच्छंसनं विहारश्चेति विधीयते। स्तोत्रियानुरूपौ प्रस्ता वालखिल्याः शंसतीति श्रुतेः।

६. विहारो नाम अन्यदीयस्य सूक्तस्य अन्यदीयेन पादादिना संधायाध्यानम्[1]। तत्रानियमे प्राप्ते नियम उच्यते। पच्छः प्रथमे इत्यनेन प्रथमद्वितीये उच्येते। प्रथमद्वितीये सूक्ते पादंपादं विहरन् शंसति।

७. अर्धर्चमर्धर्चं विहरन् तृतीयचतुर्थे सूक्ते शंसति।

८. ऋचमृचं विहरन् तृतीये सूक्ते शंसति। द्विलापेचं तृतीयत्वं। पञ्चमषष्ठे इत्यर्थः।

९. उत्तमसूक्ते उत्तमोपोत्तमे सप्ताष्टमे विपर्यस्येत्[2]। अष्टमं प्रस्ता सप्तमं शंसेत्।

१०. विहृतास्वन्यथाप्येवमेव प्रतिगृणन् प्रतीक्षितव्य इति सूत्रारम्भः।

११. वाक्यद्वयं प्रतिगरः। तत्रायं विभागविनियोगः। ओथा मोदैव मदे इत्यवसाने मोदा मोदैवो थो ३ इति सुताश्च प्रणवे।

१२. त्यमू षु वाजिनमिति तार्क्ष्यं तस्यानुवादेन शंसनं विधायोत्तमां परिशिष्येत्येवमादि विधीयते। उत्तमां मुक्त्वाहावं करोति। ततो दूरोहणं हंसः शुचिषदिति। यथा विषुवति शंसनमस्यात्राप्यत्रापि शंसति। यथा विषुवतीत्युत्तमाहावस्य नित्यार्थम्।

१३. तार्क्ष्यः प्रकृतस्योत्तमामृचमुपसंशस्य तत ऐकाहिकौ

---

१ C संधाय मानं। २ C in marg. सप्ताष्टिपर्यस्था गर्भा आयन्ते इति श्रुतेरत्रा।

तृचौ शंसति। ऐकाहिकौ प्राकृतावित्यर्थः। तौ चर्षणीधृतमस्त्राभाद् वामिति।

१४. ऐकाहिकाभ्यां तृचाभ्यामनन्तरास्मिन्न चयो ऽस्माकमत्र पितर आसञ्जिति।

१५. इन्द्रावरुणा युवमध्वराय न इति सूक्तं शंसेत्। ततः पर्यासमिति षष्ठे इत्युपसंहरत्येतद्ग्रंथति। नात्र चतुःसूक्तान्युक्थानीति नियमः।

१६. आ ते वत्सो मनो यमदिति स्तोत्रियः। आग्निरगामि भारत इत्यनुरूपः। एतौ प्रथमे छन्दोमे भवतः।

१७. पर्यासं चीणि च पूर्वाण्यैकाहिकान्यन्तरेणेमानि वां भागधेयानि सिस्रत इति पञ्च शंसेत्। युवां नरा पश्यमानास आप्यमिति पञ्चैव[1]। षट्त्रिंशतं मैत्रावरुणश्चतुर्विंशे शंसतीति (३०. १०) श्रुतेः। चतुर्विंशे प्रत्नं प्रथमाच्छन्दोमादित्यतिदेशः।

१८. प्रेष्ठं वो अतिथिमिति स्तोत्रियः। प्रियो नो अस्तु विश्पतिरित्यनुरूपः। मध्यमे छन्दोमे छन्दोमाधिकारात्। ततो ऽनुरूपादनन्तरं आगतं तुभ्येदमिन्द्र परि षिच्यते मध्विति।

१९. भद्रो नो अग्निराहुत इति स्तोत्रियः। यदी घृतेभिराहुत इत्यनुरूपः। प्रगाथौ काकुभौ। उत्तमे छन्दोमे छन्दोमाधिकारात्।

२०. पूर्वाभ्यां सह विकल्पः। ततो ऽऽगतमेवैवापागपरे सन्तु हूत्वा इति।

---

१ A has वा instead of चाप्यमिति and inserts [after पश्यमानास] चर्षणीधृतमित्यादीनि चीणि प्रत्नेमानि वामिति पञ्च युवां नरेति वा पञ्च मत्वा पर्यासवत्सूक्तं शंसेदित्यर्थः।

२१. न हि ते क्षत्रं न सहो न मन्युमित्युभयोश्छन्दोमयो-र्मध्यमोत्तमयोः सूक्तशेषो द्व्यर्चः।

२२. इन्द्रा को वां वरुणा सुम्नमापेति मध्यमे छन्दोमे।

२३. अर्ष्टी वां यज्ञ उद्यतः सजोषा इत्येतत्सूक्तमुत्तमे छन्दोमे।

२४. इमा उ वां भृमयो मन्यमाना इति तिस्र उभयो-श्छन्दोमयोः। उक्तान्युक्थानि मैत्रावरुणस्य। ब्राह्मणाच्छंसिन इदानीं वक्तव्यानि। तदर्थमाह।

---

## १२.

१. एवा त्वामिन्द्र वज्रिन्नत्रेति ... एवा ह्यसि वीरयुरिति स्तोत्रियः। एवा ह्यस्य सूनृते-त्यनुरूपः। गायत्रीषु ब्राह्मणाच्छंसिने प्रणयन्ति द्वितीये ऽहनीति श्रुतेः। अनुरूपादनन्तरं आगतं प्र वः सतां ज्येष्ठतमाय सुष्टुति-मिति। एतेनैवापागपरे सन्तु दूत्य इति केचित्[१]। तद्विचार्यम्।

२. यस्तस्तम्भ सहसा वि ज्मो अन्तानिति षड् द्वितीये ऽहनि। ब्राह्मणाच्छंसिन इत्यधिकार आ अच्छावाकशब्दात्।

३. यस्तस्तम्भेति षळुत्तरयोरपि छन्दोमयोः सूक्तानां मध्ये भवन्ति।

४. यो अद्रिभित्प्रथमजा ऋतावेति सर्वत्र पूर्वं पर्यासाच्छंसेत्। त्वचयत्वं षष्ठे चोर्ध्वं त्वचेभ्य इत्यत्रोपयुज्यते।

५. अस्तेव सु प्रतरं लायमस्यन्निति पर्यासस्तृतीयपञ्चमयोरह्नो-र्मध्यमे च छन्दोमे भवति।

१ केचित् C in marg. D om.

६. अच्छा म इन्द्रं मतय: स्वर्विद इति पर्याय इतरेष्वहःसु द्वितीयचतुर्थषष्ठसप्तमनवमेषु।

७. तं ते मदं गृणीमसीति स्तोत्रिय:। तम्वभि प्र गायतेत्यनुरूप:। उष्णिह एता:। ककुप्सु मैत्रावरुणाय प्रणयन्ति तृतीये ऽहंस्तेनो स ब्राह्मणाच्छंसिनो वयमेतीति (२०.८) तुल्यच्छन्दस: शंसनं वयगमनम्। अनुरूपादनन्तरमैन्द्रं जागतं। त्रिविष्टिधातु प्रतिमानमोजस इति केचित्। तदपि विचार्यम्।

८. अनर्वाणं वृषभं मन्द्रजिह्वमिति सूक्तं तृतीये ऽहनि भवति।

९. उदप्रुतो न वयो रक्षमाणा इति सूक्तं चतुर्थे ऽहनि भवति। स्तोत्रियानुरूपावत्र नोक्तौ उक्थेषु विकारवचनात्[१] (१२. १०. १)। प्राकृतौ वयमु त्वामपूर्व्य यो न इदमिदमिति (९. ३. ९)। उष्णिक्षु ब्राह्मणाच्छंसिने प्रणयन्तीति चतुर्थे ऽहनीति श्रुते:। उष्णिक्ककुभस्तुल्याचरत्वात्। अनुरूपादनन्तरमैन्द्रं जागतं। यो नो दास आर्यो वा पुरुष्टुतेति। परि कुत्सादिहा गहीति परिवत्। अपरे अश्वान एव व्यबाधत स्पृध इति वदन्ति।

१०. उदप्रुत इत्येव।

११. प्र मंहिष्ठाय यो अद्रिभिदत्र द्रप्स इत्येतेभ्य:।

१२. इन्द्राय साम गायतेति स्तोत्रिय:। तम्वभि प्र गायतेत्यनुरूप:। अनुरूपादनन्तरमैन्द्रं जागतं विश्वे ह्यस्मै यजताय धृष्णव इति।

१३. यज्ञे दिवो नृषदने पृथिव्या इति सूक्तं पञ्चमे ऽहनि मध्यमे च च्छन्दोमे यज्ञे दिव इति।

---

१ M °त्र विकार इति विकारवचन°।

१४. इमा नु कं भुवना सीषधामेति द्वैपदः स्तोत्रियः कार्यः।

१५. तृतीयमनुरूपक्लृप्तिः। इमा नु कमिति द्वैपदस्य स्तव-स्तोत्तरे द्वे अया वाजं देवहितं सनेमेति तृतीयानुरूपस्य कार्या।

१३.

१. अथ प्राह इन्द्र विश्वाँ अभिचानिति सूक्तं सुकीर्तिसंज्ञितं शस्त्वा पङ्क्तिशंसं वृषाकपिं शंसेत्। वृषाकपिर्नाम वि हि सोतोर-सृक्षतेति सूक्तमृषिनाम्ना निर्दिश्यते। तं पङ्क्तिशंसं न्यूङ्खयति। कथमित्याह। मध्यमस्य पादस्य द्वितीयोत्तमयोरक्षरयोर्न्यूङ्खं विशेषयन्नाह।

२. वैराजः पूर्वस्मिन्निति। वैराज उभयरूपश्चतुर्थे ऽहनि। स पूर्वस्मिन् न्यूङ्खस्थाने द्वितीये ऽक्षर इत्यर्थः[1]। द्वितीयस्थाने[2] स्वरूपं उदाहरत्यन्यत्रापि व्यञ्जनान्ते सन्धिविशेषज्ञापनार्थं। मद्वृषाकपो ३ ओ ३[3] अर्यः पुष्टेषु मत्सखेत्युत्तरस्मिन्निति पूर्वाभिप्रायम्।

३. प्रतिगृणाति यावत्तावत्प्रतीच्यते शंसिता। तदुभयमुदा-हरति।

४. वैराजं द्वादशौकारं न्यूङ्खमुक्त्वा ततो मदेथ मदैवो ओ ओथा मोदैव एवं प्रतिगृणाति।

५. तदिति वाक्योपादाने। यच शाखान्तरीयमतः "सर्वाह-न्यूङ्खपक्षे उपद्रुतसन्धिमुक्तमक्षरं तस्मात् यथा चतुर्थमहस्तैत्तिरीयाणां

[1] M om. द्वितीये ऽक्षर इत्यर्थः द्वितीये स्थाने। [2] A द्वितीये। [3] C D कपो ओ ओ; sec. h. कपो ३ ओ ओ ३। [4] C M D सर्वाहन्‌ A सर्वाहन्‌।

सर्वं न्यूङ्खम्। उपद्रुतो नाम सन्धिर्बाष्कलानां प्रसिद्धस्तस्योदाहरणं। न ऋते श्रान्तस्य सख्याय देवा इति। अभिनिहित उक्तः सन्धिः प्रातिशाख्ये। अथाभिनिहितः सन्धिरित्येवमादिना ग्रन्थेन (२. १२)। तस्योदाहरणं। परे ऽवर उभया अमित्रा इति संसवे प्रयोगः। प्रश्लिष्ट उक्तः। समानाक्षरे सस्थान (२. ६) इत्येवमादिना ग्रन्थेन प्रातिशाख्ये प्रतिपादितः। तस्योदाहरणं। भाग्रेषसो ऽवीरता परि त्वेति। अथ क्षिप्रसन्धिः। समानाक्षरमन्तःस्थां (८) स्वामित्येवमादिना[1]। तस्योदाहरणं। स्वध्वरः सुचेतुनेति प्रगाथे[2]। सन्धिवचनं कृत्रिमस्वाभाविकयोरुभयोर्ग्रहणार्थं। न्यूङ्खनीयस्य पादस्यादाविति[3] न मध्ये। उपातीत्यातिक्रम्य तदुपद्रुतादिसन्धियुक्तं। द्वितीये प्रदर्शनार्थं द्वितीयवचनं। हर्यश्वाद्रिरित्युदाहरणं[4] ज्ञापकं। आ न्वो३ इति क्षिप्रस्योदाहरणम्। क स्यो इति स्वाभाविकस्य प्रदर्शनार्थम्[5]। कृत्रिमस्योदाहरणस्य द्वित्वं तु विशेषणार्थम्। ततस्तृतीये ऽप्यक्षरे सन्ध्ये एव[6] (?)। यस्येदमप्यमिति। यथा त्वं देव मघवद्भ्यः सुषूद इति बाष्कलिकायां[7] लक्षणमुक्तं[8] तस्य परिहरणार्थम् संनिपातसन्धियोगयोः सन्धिं[9] व्यूहेदिति ततो ऽत्र दकारे न्यूङ्खः स्यात्। शौनकेन

---

१ A ins. उक्तः। २ A प्रगाथः। ३ C (orig.) D पादस्येत्यादाविति। ४ C D ०हरणं०। ५ A ०दर्शनार्थं। द्वित्वं तु मध्यमस्य पादस्य द्वितीयोऽक्षरयोरिति (१०. ५. १०) भिन्ने द्वितीये ऽक्षरे इति पुनर्द्वित्वं तु कृत्रिमस्य विशेषणार्थं। तेन स्वायस्य यस्येदमित्यादौ तृतीयस्यापि सन्धिं कृत्वा द्वितीयत्वं संपाद्य तत्र न ?) न्यूङ्खयेत् त्वं देवेत्यत्र तु लक्षणान्तरात् सुवं देव इति अक्षराभाव इति दकार एव द्वितीयं इति फलितो ऽर्थः विशेषणार्थम्। ततस्तृतीये ऽप्यक्षरे सन्ध्य एव न्यूङ्खयेत्। यस्येद०। ६ C D सन्ध्येव, ७ A C D बाष्कलिकायां M बाष्कलिकायाम् C in marg. ०ष्कलि। ८ C D लक्षणमुक्तम्। ९ C D संबन्धं व्यूहेदिति।

त्वविशेषेण व्यूहस्य उक्तत्वात् वकारे प्राप्नोति[1] तच्च न युक्तं क स्वो इत्युदाहृतत्वात्।

६. अथ यत्र स्यादिति ब्रुवन् कचिच्छाखान्तरे पञ्चालपद-वृत्त्याख्या विवृत्तिर्नास्तीति ज्ञापयति। तथा च नो इत्युदाहरण-पाठः। शाकलाभिप्रायेण विवृत्तिप्रत्यये विवृत्तेः प्रत्युदाहरणं[2] ये अस्या आचरणेषु दध्रिरे इत्यकारे न्यूङ्खः। ननु अकार एवात्र द्वितीयः तत्रैव न्यूङ्खेन भवितव्यं। किमर्थं सूत्रमेतत्। उच्यते। सूत्रारम्भादेवं[3] ज्ञायते। सन्ध्यक्षराणामपि न्यूङ्खने[4] पादे विकर्षो भवति। तेन एकार एव द्विधाकृते तृतीये भागे न्यूङ्खः प्राप्नोति। स मा भूदिति विवृत्तिप्रत्यये न्यूङ्खयेदित्युक्तं। यस्येदमप्यं हविः यदायुक्त त्मनेत्युभयोः पदयोः सन्धिं कृत्वा न्यूङ्खः स्वा न्वो इत्युदा-हरणतुल्यत्वात्। मुष्को श्रो इदस्या एजत इत्यकृत्वा[5] सन्धिं उप-द्रुतादिपरिसंख्यानात्। विश्वश्चाविति सानुनासिकेन[6] प्रत्यादानं पराङ्गत्वात्[7]। प्र शो श्रो श्रो श्रो३ श्रो श्रो श्रो श्रो३ श्रो श्रो श्रो श्रो३ र्धायेति रेफस्वरभक्तिदकारेण पराङ्गपक्षे तु लोपः। विष्णो श्रो श्रो श्रो३ इत्येवमादिषु तु लोप[8] एव पराङ्गत्वात्[9]।

७. तं वृषाकपिं शस्त्वा कुन्तापं शंसति। तमिति साहचर्यार्थम्।

---

१ C D ऽभिप्राप्नोति। २ A ०प्रत्यये इत्तं यर्धुद० M परे उदा०। ३ A ०भाष्टेत-ननस्वभारीमित्। ४ A न्यूने। ५ C D त्वा न सन्धिं। ६ A सानुनासिकेन। ७ C D M पदान्तत्वात्। ८ C D त्युत्तोप M फलो०। ९ C D M पदान्तत्वात् C (in marg.) प्रत्यादानं पदान्तस्था इव प्र शो श्रो श्रो३ र्धायेति कारः क्रमजः पूर्वाचरस्य ·· ततो लोपः।

## १४. १५.

Without commentary.

## १६.

१. उष्काणां च तिस्रो नाराशंस्यः। ततस्तिस्रो रैभ्यः ततः कारव्यास्तिस्र एव। ततस्तिस्र इन्द्रगाथास्तिसृणामन्तरा भूतेच्छदः।

२.[१] शस्त्वा ततोऽनन्तरं वक्ष्यमाणास्तस्रः पारिक्षित्यस्तासां तृतीये पादे प्रथमचतुर्थयोरक्षरयोर्वैस्वर्यं कुर्यात्। उदात्तानुदात्त-स्वरितप्रचितानां स्वरान्तरैः।

---

## १७.

१. एतास्तस्रः पारिक्षित्यः।

२. वैस्वर्यानन्तरमेव प्रतिगरणार्थौत्यर्थः[२]।

३. पारिक्षितीः शस्त्वा तत एतशप्रलापो वक्ष्यमाणो त्रिंशति-पदः। तमेतशप्रलापं निविच्छन्दं शंसति।

---

## १८.

१. इत्येतशप्रलापः।

---

## १९.

१. षट्पदेयं तस्यां द्वाभ्यांद्वाभ्यामवसाय द्वाभ्यां प्रणौति।

२. त्रिष्टुबेषा।

---

१ M inserts भूतेच्छदः। २ M ०नन्तरे प्रगाथ इत्यर्थः।

३. पङ्क्तिरियं द्वाभ्यामवसायद्वाभ्यामवसायैकेन प्रणौति। श्रो-

४. इयं गायत्री।

५. इत्येतास्तस्र आदित्या अङ्गिरस्यः।

६. एवाह जरितरोथा मोदैवेत्यवसाने तथा ह जरितरोथा मोदैवेति प्रणवे सुतान्ततान्येषां पाठात्[१]। अन्ये तु प्रकृतिदृष्टत्वात्[२] सुतं न पठन्ति।

---

२०.

१. दिशां क्लृप्तीः शंसतीति श्रुतेः।

२. एताः पञ्च दिशां क्लृप्तयः संज्ञया।

---

२१.

१. जनकल्पाः शंसतीति श्रुतेः। षळिति संदेहव्युदासार्थम्। अत इति क्रमार्थम्।

२. एता जनकल्पाख्याः।

३. ५. ततः प्रवल्हिकासंज्ञा अतस्त्रयश्च प्रतीराधा अनन्तरं[१] तन्निविच्छंसं शंसेत्।

---

१ M सुतान्ततान्ये०। २ C प्रकृतिदृष्टे D प्रकृतिदृष्टत्वं (?)।
१ C D अनन्तरमनन्तरं।

२२.

No commentary.[१]

२३[१].

१. इति चतस्रः प्रवल्हिकाः।

२. एतास्तिस्रः प्रतीराधाः।

३. अन्तावृनि जरितरित्येवमादीनामेकैकमुक्त्वा नित्यं प्रतिगरं ओथा मोदैव इति ब्रूयात्। अध्वर्युः प्रतीच्छितव्यः।

४. इयमतीवादा। प्रवल्हिकाः प्रतीराधानतीवादामाहनस्या इति श्रुतौ संज्ञाकरणात्।

५. पत्नी चियस्यमाना[२] जरितरोथामोदैवेत्यवसाने। होता विद्धो मे जरितरोथा मोदैवेति प्रणवे एतमस्यामतीवादायां प्रतिगरणान्तं प्रतीच्छेत।

२४.

१. अतीवादाया अनन्तरं वक्ष्यमाणा दशाहनस्यासंज्ञाः शंसति।

२. अष्टौ एताः। ता वा अष्टौ भवन्तीति श्रुतेः।

३. कपृन्नरः कपृथमुद्दधातन। यद्ध प्राचीरजगन्तेति द्वे इति श्रुतेः। एवमेताः पूर्वाभिरष्टभिः सह दश।

४. तासामाहनस्यानां तृतीये पादे न्यूङ्खः कर्तव्यो यथा वृषाकपावुक्तः।

---

१ vers 7 is left out in all MSS. २ C (in marg.) कश्चिदत्रमेधातो क्रोधायमिमेधमनध्वर्युप्रत्ययायद्वा तदर्थमिव पाठः। ३ C ययस्या०।

५. कपृन्नरः कपृथमुद्दधातनेत्येतस्या द्वितीयदशमयोरर्धर्चयोर्यथा वृषाकपौ तथा न्यूङ्खः कर्तव्यः।

६. इतरासामाहनस्यानां द्वितीये ऽर्धर्चे वैराजन्यूङ्खमुक्त्वा तृतीयस्य पादस्यान्ते आनुष्टुभेन न्यूङ्खेनावसाय तत उपरितनं पादं शंसेत्। चतुर्थः पादः संतानायोत्तरस्या ऋचः कर्तव्यः[1]।

७. अत्र प्रतिगरे विप्रश्नतयः[2] त्रय इकारा ह्रस्वाश्चतुर्थः प्लुतः। एवमपरौ द्वौ चतुष्कौ। ततः किमयमिदमाहो ओ ओथा मोदैवेति प्रतिगृणाति।

---

## २१.

१. आहनस्यामन्तरं दधिक्राव्णो अकारिषमित्येकां शंसेत्। दाधिक्रीं शंसतीति (३०. ८) श्रुतेः। एकाग्रहणं तृचाशङ्कानिरासार्थम्।

२. सुतासो मधुमत्तमा इति तृचं। प्र मंहिष्ठाय बृहते बृहद्रय इति तृचं। यो अद्रिभित् प्रथमजा ऋतावेति तृचं। अव द्रप्सो अंशुमतीमतिष्ठदिति तृचं। एतानि[3] पूर्वं च यदुक्तमिमा नु कमित्यारभ्य एतत्षष्ठं भवति।

३. त्वं न इन्द्रा भरेति स्तोत्रियः। तदिन्द्राव आ भरेत्यनुरूपः।

४. स्तोत्रियानुरूपादनन्तरं प्र मंहिष्ठाय बृहते बृहद्रय इत्येतदेव पञ्चर्चं सूक्तमैन्द्रं आगतं भवति। न विकल्पो ऽन्येन सह। प्र

---

[1] C D ऋचोवर्तव्यः M ऋचपर्तव्यः। [2] C D om. अत्र प्रतिगरे विप्रश्नतयः। [3] M ins. त्र्याणि।

मंहिष्ठाय इष्यते इष्टद्रय इति वचनं दिस्रावयावन्मैत्रावरुणस्येति (१०.९) श्रुतिवचनमेवंविषयमेव ।

५. यो अद्रिभित्प्रथमजा ऋतावेत्येका शस्यते । सा चशब्दात् सूक्तस्थाने गण्यते । चत्वारि सूक्तानि ब्राह्मणाच्छंसी शंसति प्रथमे छन्दोम इति श्रुतेः ।

६. एन्द्र नो गधि प्रिय इति स्तोत्रियः । एदु मध्वो मदिन्तरमित्यनुरूपः । मध्यमे छन्दोमे छन्दोमाधिकारात् । अनुरूपादनन्तरं आगतं ऐन्द्रं । नाना हि त्वा हवमाना जना इम इति । अमात्रं त्वा धिषणा तित्विषे महीति महद्वत् । शेषं पुरस्तादुक्तं यस्तस्तम्भेत्यादि ।

७. उष्णिक्तु ब्राह्मणाच्छंसिन इति श्रुतेः । प्राथम्यादेष्वमननः[१] । एतो न्विन्द्रं स्तवाम सखाय इति स्तोत्रियः । सखाय आ शिषामहीत्यनुरूपः । उत्तमे छन्दोमे छन्दोमाधिकारात् । अनुरूपादनन्तरमैन्द्रं आगतं । अस्य श्रवो नद्यः सप्त बिभ्रतीत्यस्याक्रमंशमुद्वा भरेभर इति निवृत्तिः । शेषमुक्तम् ।

---

## २६.

१. इन्द्रं विश्वा अवीवृधन्निति स्तोत्रियः । इन्द्रमीशानमोजसेत्यनुरूपस्य प्रथमा । ये पूर्वे अस्मास्तवाहं शूरेत्येते[२] ते उत्तरे भवतो द्वितीये ऽहनि[३] । एवमयं त्र्यचः । अग्निं दूतमित्याग्नेयत्वाद्-

---

१ M ०ष्वाव वै० CD om. प्राथम्यादेष्वमननः । २ C D M om. स्तवाहं शूरेत्येते ।
३ C D M om. द्वितीये ऽहनि C (orig.) M भवत इव न ।

नन्तरस्य। अनुरूपादनन्तरमैन्द्रं आगतं। अभि त्यं मेषं पुरुहूत-मृग्मियमिति चयोदश। वृत्रं यदिन्द्र शवसा वधीरहिमिति वृत्रहवत्।

२. नू मर्तो दयते सनिष्यन्नित्येतत्सूक्तमच्छावाकस्यैन्द्रादनन्तरं द्वितीयचतुर्थयोरह्नोः प्रथमोत्तमयोश्च छन्दोमयोः शस्यम्।

३. विष्णोर्नु कं वीर्याणि प्र वोचमित्येतत्सूक्तमच्छावाकस्यैन्द्रा-दनन्तरं तृतीयपञ्चमाष्टमेषु[१]।

४. उरुं यज्ञाय चक्रथुरु लोकमित्येतत्तृचं पर्यासात्पूर्वं भवति सर्वेष्वहःसु। सर्वग्रहणमितरेषु इत्यस्यानुवृत्तिर्मा भूत्[२]।

५. सं वां कर्मणा समिषा हिनोमीत्येष सर्वदाच्छावाकस्य पर्यासो भवति। अत्र सर्वदाग्रहणादुरुं [३]यज्ञायेत्यस्य क्वचिद्गमन-मपि। तथा च षष्ठे ऽहनि परो मात्रयेत्यत्र विनियुक्तस्य न पुनः-शंसनम्।

६. श्रुधी हवं तिरश्च्या इति स्तोत्रियः। आश्रुत्कर्ण श्रुधी हवमित्यनुरूपस्तृतीये ऽहनि। अनुरूपादनन्तरमैन्द्रं आगतं त्यं सु मेषं महया स्वर्विदमित्यष्टौ। द्यौश्चिदस्यामवाँ अहेः स्वनादिति पञ्च। इवनस्यदं रथमिति रथवत्।

७. इममिन्द्र सुतं पिबेति स्तोत्रियः। पिबा सोमं मदाय कमित्यनुरूपः चतुर्थे ऽहनि। अनुरूपादनन्तरमैन्द्रं आगतं। अयं भुवं वसुनः पूर्व्यस्पतिरेकादश। एता विश्वा सवना तूतुमा कृष इति द्वे। चिताय मा अजनयमिति जातवत्।

---

१ C D ०ष्टकेषु। २ C D M om. इत्यस्यानुवृत्तिः। ३ A M मद्या०।

८. असावि सोम इन्द्र त इति स्तोत्रियः। इममिन्द्र सुतं पिबेत्यनुरूपः पञ्चमे ऽहनि। अनुरूपादनन्तरमैन्द्रं आगतं। अयं हां गृणते पूर्व्यं वस्वित्येकादश। प्र वो मह मन्दमानायान्धस इति द्वे स्वार्चं गवामूधःस्विति पञ्चमत्।

९. प्र व इन्द्राय वृत्रहन्तमायेत्यारण्यकपठितः स्तोत्रियः। अनुरूपो विश्वतोदावन्विश्वतो न आ भरेति षष्ठे ऽहनि। षष्ठग्रहणमुपरिष्टादिह चोद्यमानमतिरिच्यते। तस्य प्रयोजनं[1] इन्द्रमीशानमोजसेति द्वितीय एवाहनि (२६. १)। अना-रभ्यवादाशङ्काच न[2] कार्या। सर्वेष्वहःसु स्तोत्रियानुरूपवि-धानात्।

१०. एवयामरुतं[3] प्र वो मह इति यथा वृषाकपिमेव शस्त्वा ततो ऽनन्तरं। यथा वृषाकपिमिति मध्यमस्य पादस्येत्येवमाद्यति-दिश्यते (१३. १)।

११. इह मदो ओ ओ ओ३[4] ओ ओ ओ ओ३ ओ ओ ओ ओ३ मदे मधोर्मदस्य मदिरस्य मदेवो ओ ओथा मोदेव एवं प्रतिगृणात्यध्वर्युः प्रतीचितव्यः।

१२. ऋतुर्जनित्री तस्या अपस्परीति सूक्तमेवयामरुतो ऽन-न्तरं शंसेत्।

१३. तमस्य द्यावापृथिवी सचेतसेति सूक्तमृतुर्जनित्रीयानन्तरं शंसेत्।

---

१ A ins. इन्द्रं विश्वा। २ M तु। ३ A om. एवयामरुतं।
४ C adds one ओ more.

१४. विष्णोर्नु कं वीर्याणि प्र वोचमिति सूक्तं तमस्य द्यावा-पृथिवी इति शस्त्वा।

१५. प्र वः पान्तमन्धसो धिया यत इति सूक्तं विष्णोर्नु-कीयादनन्तरं शंसेत्।

१६. प्र वः पान्तमन्धस इत्येतत्सूक्तं छन्दोमेषु च शस्यते न केवलमत्र।

१७. प्र वः पान्तमन्धस इत्येतस्य तिस्रः शंसेत् प्रथमे छन्दोमे। तुशब्दो नियमार्थः। ततो न सूक्तं विकल्प्यते।

१८. उरुं यज्ञायेत्यस्मात्तृचात्पूर्वं भवाग्निवीयमुत्तरयोश्छन्दो-मयोर्भवति। तत्रैव नोच्यते। षष्ठे ऽप्यहनि भवाग्निवीयं कथं नाम स्यादिति। तच्च शाखान्तरादिकल्पेन प्रकरणपाठस्य[1] कारणत्वेना-पि सूचितमेव।

१९. नू मर्तो दयते सनिष्यन्निति सूक्तं। परो मात्रया तन्वा वृधानेति सूक्तं उभमामृचमुद्धृत्य शस्यते। उरुं यज्ञायेत्यस्य सूक्तस्य[2] शंसनं कृत्वा न पुनरिति (26.5 Comm.)। षष्ठ इत्युपसंहारात् विष्णोर्नु कमितीतरेष्वित्यस्य[3] विशेषेणाप्युक्तं[4] भवति। ननु[5] भवत्येव नू मर्तः परो मात्रयेति। [6]सत्यम्। चोदनाक्रमेणानुरूपा-दनन्तरं पुनर्मा[7] भूत्।

---

१ C D °पाठाकरणात्वे°; C in marg. स्य। M पाठाच। २ A उभयस्य परो मात्रयेत्यस्य सूक्तस्य। ३ A °रेष्वेत्यवि°, C रेष्वित्यस्य वि°। ४ A °प्युक्तं आगतं च। ५ A न ननु। ६ A मात्रयेति नू मर्तस्तस्मिन् सति कुतो विष्णोर्नु कमिति चेत्। सत्यम्। ७ A पुनर्विष्णोर्नु कमिति मा भूत्। पर्यायस्तु भवति सदापयपातू चपुतपर्यायो चोदाकरति पुनेच।

२०. यदिन्द्र चित्र मेहनेति स्तोत्रियः। यदिन्द्र ते चतस्र इति अनुरूपः। प्रथमे छन्दोमे। अनुरूपादनन्तरमैन्द्रं आगतं। तदस्मै नव्यमङ्गिरस्वदर्चतेत्यष्टौ। अजातशत्रुमजरा स्वर्वतीति पञ्च। ओजो मिमानो महिमानमतिरदित्यावत्।

२१. पुरां भिन्दुर्युवा कविरिति स्तोत्रियः। अस्यैव यः पूर्वस्तृचः सो ऽनुरूपः। तृतीया तु प्रथमा। उत्तरयोराम्नायक्रमः। मध्यम इति मध्यमे छन्दोमे छन्दोमाधिकारात्। अनुरूपादनन्तरमैन्द्रं आगतं। प्र ते महे विदथे शंसिषं हरी इति चयोदश। मह इति महद्वत्।

२२. गायन्ति त्वा गायत्रिण इति स्तोत्रियः। अनन्तर एवानुरूपः। उत्तमे छन्दोमे छन्दोमाधिकारात्। अनुरूपादनन्तरमैन्द्रं आगतं। अर्चा दिवे बृहते शूष्यं वच इति नव। दिवश्चिदस्य वरिमा वि पप्रथ इति चतस्रः। दिव इति तदमुष्य लोकस्य रूपम्।

---

## २७.

१. उक्थ्येषु विकार इत्यनुवर्तते। द्वितीयप्रभृतीनां पञ्चानां षाष्ठिकानां छन्दोमानां चोपदिष्टान्युक्थानि। तान्येवेतरेषामुपदिश्यन्ते। चतुर्विंशे ऽहनि प्रथमात् छन्दोमाच्छस्त्रं सर्वेषां होत्रकाणां भवति। षट्त्रिंशतं मैत्रावरुणश्चतुर्विंशे शंसति चत्वारिंशतं ब्राह्म-

णाच्छंसी चतुश्चत्वारिंशतमच्छावाक इति (३०.१०) लिङ्गात्। शस्त्रग्रहणात्तृकशाभि स्तोत्रियानुरूपौ चानुवृत्तेः[1]। सर्वग्रहणमच्छावाकाधिकारनिवृत्त्यर्थम्।

२. यच्चतुर्णां द्वितीयप्रभृतीनां पार्ष्ठिकानां शस्त्रं तद्दवशिष्टं चतुर्णामाभिप्लविकानां द्वितीयप्रभृतीनाम्।

३. तृतीयप्रभृतिभ्यः पार्ष्ठिकेभ्यः स्वरसामसु यथासङ्ख्येन शस्त्रम्।

४. अभिजिदादीनि यदि परमतेनोक्थ्यसंस्थान्यथानि कुर्युस्तनस्त्रातुर्विंशिकानि सद्दैन्द्रेभ्यः जागतेभ्यः सकलान्येवोक्थ्यानि कार्याणि। अन्यसंस्थेषूक्थ्यवत्सु न्यायकल्पितानि। नकाह्निकान्युत्तरचैकाह्निकवचनात्। न्यायकल्पे वृद्धसंप्रदायो लिख्यते। जागतविशेषपर्यासवैष्णवविपर्यासः[1]। वैष्णवे विपर्यासो[2] योऽग्निर्भीयोर्द्वयशायशिल्पानि[4] चतुःसूक्तान्येव। जागतपर्यासयोर्मध्ये मैत्रावरुणस्य मध्यमे द्वे जागते। ब्राह्मणाच्छंसिन उदप्लुतीयं योऽग्निर्भीयात् पूर्वं। अच्छावाकस्य न्यायकृप्तमेव महाव्रतीयमहरिति वा। अहर्वचनस्य कृत्स्नार्थस्य पुरुषमेधीयमध्यमे प्रतिषेधार्थ आरम्भः। स हि षोडशिसंस्थो द्विवसः संज्ञापकत्वापितत्वात्। अन्यसंस्थस्य न्यायकल्पनात्।

५. अथ यदीति वचनात् अत्रापि परमतमेव। ऐकाह्निकान्येव न न्यायकृप्तानि। प्राप्तेषु पुनर्वचनात्।

---

१ C D •रूपावनुवृत्तेः। २ A वैषुवतपर्यासः। ३ C विपर्यासो M विपर्यासः।
४ C (orig.) •रंयाशाया D •यंयशाय।

६. ततो ऽथ यदीत्यनुवर्तत एव। अथ यद्युत्तममाभिप्लविक-मुक्थ्यं कुर्युः ततो द्वितीयस्याह्नः पाष्ठिकस्य यत् तृतीयसवनं होत्र-काणां होतुश्चोक्थं तदुत्तमस्याभिप्लविकस्य भवति। द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति।

इति शाङ्खायनश्रौतसूत्रभाष्ये द्वादशो ऽध्यायः समाप्तः।

---

# अथ त्रयोदशो ऽध्यायः।

१.

१. अभिजिदादयो ऽग्निष्टोमाः स्वश्रुतावुक्तास्तेषां स्वश्रुति परित्यज्य किमर्थमुक्थान्युपदिष्टानीति। यत इदमाह। पूर्वकारिणश्छन्दोगा अध्वर्यवः। उत्तरकारिणो बह्वृचा इत्यर्थाद्गम्यते। न हि पत्नग्रहणं[1] स्तोत्रस्तवनं च शस्त्रमन्तरेण परिसमाप्यते श्रुतेर्न्यायाच्च।

२. एवं तावदुपदिष्टं युज्यते कर्तुं। यदि पुनस्ते छन्दोगाध्वर्यवो ऽस्वश्रुतिकल्पानुपदिष्टं कुर्युस्ततः कथमिति। उक्त एव न्यायो यथास्तुतमनुशस्यं [2]कल्पशस्त्रैरप्युत्तरकारिभिर्भवितव्यं[3]। शाखान्तरविहिते तदा कल्प्यं[4] वा स्यात्। सूत्रारम्भयत्नात्। अत्रोदाहरणं। यदि त्रिकद्रुकीयास्वष्टाचत्वारिंशेन स्तुवता तदा रात्रिपरिशेषं च शंसति असंलोपाय ऐन्द्री त्रिष्टुब्भवति। याज्या पिबा सोमं महत इन्द्रियायेत्युत्तरा वा मरुत्वती भवति। यानि चोत्तमस्य छान्दोमिकस्य[5] निष्केवल्यसूक्तानि तानि वा शंसेत् अष्टाचत्वारिंशस्तोमसामान्यात्। पूर्वैव तु याज्या। यद्योत्तममतिरिक्तं तदा कुर्युरिति भारद्वाजकानां। तत्राश्विनीभिः स्तोममतिशंसेदाश्विनीयाज्या जगत्यस्तु कर्तव्याः। सवनच्छन्दोगवशात्। तत्र त्रिषु षष्टिशतेषु या न प्रयुक्तास्ताः कार्याः। संभवे सकृत्क्रियान्याय्या। आ वां रथं

---

१ C D om. पत्न। २ A कल्पशास्त्रैर०। ३ D भवि०। ४ A ०विहिते तदा कल्प्यं वा ऽस्यात्। ५ C D om. स्य।

पुरुमाय्यं मनोजुवमिति दश। अबोध्यग्निर्ज्म उदेति सूर्य इति चतस्रः। अभूदिदं वयुनमो षु भूषतेति पञ्च। कः श्विह्वृषो निष्ठितो मध्ये अर्णस इत्येका। अर्वाञ्चमद्य यय्यं नृवाहणमित्येका। एष स्य भानुरुदियर्ति युज्यत इति षट्। यदिन्द्रेण सरथं याथो अश्विनेत्येका। उभा हि दस्रा भिषजा मयोभुवेति पञ्च। यो वां परिज्मा सुवृदश्विन रथ इति पञ्च। भुज्युमंहसः पिपृथो निरश्विनेत्येका। एता वा याज्याः। अर्वाञ्चमद्य यय्यं नृवाहणमिति याज्या। उत स्या वां मधुमन्मक्षिकारपदिति वा महती।

३. इष्टीनां शस्त्वंतादिनि[1] क्रियमाणे हविषां यागक्रमेण दैवते शब्दे सगुणनिर्गुणे उच्चैरुपांशुतायां च मन्द्रादेः शब्दस्य। एतेष्वध्वर्युमनुविदधीत। तदुक्तं कुर्यादात्मीयमुपदिष्टमप्युपेक्षेत। यजमानो ऽन्यो वाध्वर्यवलादस्य।

४. स्तोत्रियादिषु छन्दोगमनुविदधीत। उपदिष्टमप्यात्मीयं नाद्रियेत तत्प्राधान्यात्।

५. छन्दोगानुविधानस्यायमपवादः। अत्रोदाहरणं। सुरूपकृत्नुमूतये सुदुघामिव गोदुहे जुह्मसाइ द्यविद्यवाइ द्यविद्यवाइ द्यविद्यवाइ[2]।

६. पूर्वेषामादरे[3] प्राप्ते विशेषे ऽनुविधानं। ऋचां विपर्यासमनुविदध्यादेव।

७. येन हृचाणि हर्यश्व हंसीत्येवमादिको न्यूङ्खनीयः पादो

---

१ D शास्त्रानि क्रि॰ C in marg. एतावत्स। वेदां परि।

२ A om. द्यवि द्यवाइ। ३ A ॰वादरे।

विकर्षेण पूर्येत। ततस्तस्य विकर्षस्य द्वितीयं भागं गणयित्वा न्यूङ्खनीयं संपादयेत्। तथा निष्टिग्र्यः पुत्रमा च्यावयोतय इति। संख्यानमात्रमेव विकर्षस्यात्र विधीयते। न तु विकृष्टप्रयोगः। ननु न्यूङ्खाधिकार एवास्य विधानं युक्तं। उच्यते। इह विधानस्यैतत्प्रयोजनं न्यूङ्खनीयपादव्यतिरेकेणान्यत्र न्यूङ्खने पादे छन्दोगैर्विकृष्टे तदनुविधानाधिकारात् विकर्षप्रयोगेणापि पादपूरणं यथा स्यादिति। अत्रोदाहरणं। मा नो अज्ञाता वृजना दुराध्य इति।

८. अयं च न्यूङ्खसंबन्धो विशेषः प्रसङ्गादिहोच्यते[१]। न्यूङ्खनीयात्स्वरादूर्ध्वं यानि समानि छन्दोमानानि तेनैव स्वरेण तुल्यं छन्दोमानं कुर्वन्ति। तदङ्गानीत्यर्थः। तानि लुप्येरन् अदर्शनं[२] तेषां कार्यमित्युक्तं भवति। व्यञ्जनग्रहणादनुस्वारस्य लोपो भवति। अस्योदाहरणं। चतुर्थे ऽहनि न्यूङ्खे प्रातरनुवाके तपूंष्यग्ने जुह्वा पतङ्गानिति।

---

## २.

१. अथ यदि पशुरानीतो ऽनुपाकृतो म्रियेतलिङ्गभ्यस्तं कारयेदिति श्रुतेः। पशूलिङ्गभ्य एव तत्प्रकृतत्वात्।

२. यद्युपाकृतः पशुः कम्पते तत आज्याहुतिं होता जुहुयात् यस्माद्भीषावेपिष्ठा इत्येवमादिना मन्त्रेण।

३. उपाकृते वाश्यमाने यस्माद्भीषावाशिष्ठास्ततो न इत्येवमादिना मन्त्रेणाज्याहुतिं जुहुयात्।

---

१ A विशेषप्र॰। २ C in marg. यथोन्यथाभावश्च।

४. पर्य्यग्निकृते प्रवृत्ते।

५. उपाकृते पशावुपविष्टे।

६. यस्माद्भीषा संज्ञप्ता ततो न इत्येवमादिना मन्त्रेणाज्याहुतिं जुहुयात्। उपाकृते स्वयंमृते पशौ।

७. यद्रूपः यद्देवत्यो पशुः पूर्वः। पशुशब्दे ऽनुवर्तमाने पुनः-पशुशब्दात् शाखापशुष्वप्येतन्नैमित्तिकं न वेपमानाद्याज्याहुतयः।

८. उपाकृतस्य मृतस्यायं विनियोगो वचनात्।

---

३.

१. प्रवृत्तेषु प्रयाजेषु मृते पशौ तेनैव संस्थाप्यं कर्म। यदि त्वप्येकयैवाप्रिया प्रीतः स्यात्तेनैव प्रचरेयुरिति सा स्थितिरिति श्रुतेः (१८. १२)।

२. अवदाने जिह्वादौ नष्टे अनुपलभ्यमाने। दुष्टे शिष्टभक्षणायोग्ये। विमथिते। उपलभ्यमान[1] एवाप्राप्ते भ्रंशिते वाज्यं प्रतिनिदध्यात्। इति प्रतिनिधेर्नियमः।

३. पूर्वसूत्रस्यैकदेशस्यायमपवादः। हृदयस्य नाशे ऽन्यमालभेत। न तु दुष्टविमथितयोः। तत्र हि आज्यं प्रतिनिधानमेव। अन्यवचनात्[2] पूर्वस्योपलक्षणं वक्तुं छागमिति। आलभेत प्रतिनिदध्यादित्यर्थः। प्रतिनिध्यधिकाराद्दालभतिः[3] प्रतिनिध्यर्थः। अतो नाग्निप्रणयनादीनामावृत्तिः। वपापशुपुरोडाशयोर्न पुनःक्रिया

---

१ C ०लभ्यमाना।　　२ A चान्यवचनात्।

३ A चालभति, C D ०भर्तिं।

ज्ञतत्वात्[१]। सर्वेषामवदानानां परित्यागो भारद्वाजवचनात्। अग्नि-गोरावृत्तिः संग्रामनत्वात् उपप्रैषस्य च तादर्थ्यात्। मनोतापर्यग्नि-करणानामावृत्तिः। संनिपातात्।

४. यदीक्षेद्यजमानो ये मे पशुप्रध्वंसितारस्त त आर्तिं प्रा-प्नुयुरिति ततः कुविदङ्ग यवमन्तो यवं चिदित्यनेन मन्त्रेणाग्नीध्रीये आज्याहुतिं [२]जुहुयात्। होता च कुर्यादनादिष्टमिति परिभाषित-त्वात्।

५. अष्टापद्यां गर्भिण्यामित्यर्थः। वशायामनूबन्ध्यायामिति विशिष्टचोदना। चोदितायामष्टापद्यां सत्यामेतद्गर्भस्य[३] त्वचो वपारूपं फलीकरणानां फालीकरणात्। फलीकरणा मध्यमास्तु-षुतासे हि स्वविष्टान्फलीकुर्वन्ति तेषां ये फालीकरणा अवकणा[४] इति प्रसिद्धास्तान्गर्भं च। इतिशब्दस्य स्वार्थे। प्राभिचे ऽग्नौ अप-थितेतरस्य वपाप्रधानस्विष्टकृदादेराहुतिजातस्य वषट्कारेषु वपा-सुपजुहुयात्।

---

४.

१. अनपवृक्ते यूपकर्मणि स्वरुहोमे यदि यूपविरोहणं स्यात्त-नत्वाद्व बहुरूपमनेकवर्णं पशुमालभेत। पशुबन्धं कुर्यादित्यर्थः। अन्वर्गतोऽन्त्ये ऽहनि स्वरुहोमस्योर्ध्वं स्वरुहोमकालाद्विरोहणे उपरि पशावन्वायातनम्।

---

१ A तत्त्व। २ A ins पीता।
३ A एतद्गर्भस्य, C न तद्गर्भस्य, D न तद्भस्य। ४ D अवका M om.

२. वपायाः पुरोळाशस्य पशोः पुरोनुवाक्या यथासङ्ख्येन।

३. प्र सू महे सुशरणाय मेधामिति वपाया याज्या। प्रथम-भाजं यशसं वयोधामिति पुरोळाशस्य याज्या देव त्वष्टरिति पशोर्याज्या।

---

५.

१. क्रियमाणकर्मज्ञानगोचरे देवयजनान्तर्यं विद्विषाणयोर्यज-मानयोः सुत्ययोरङ्गयोः संनिपातः। एककालोपनिपातः पदा-र्थानां। तं संसव इत्याचक्षते याज्ञिकाः।

२. इतरापेक्षं[1] पूर्वत्वम्।

३. याः काश्चिदाहुतीः।

४. प्रातःसवनादावाज्याहुतीर्जुहोति संवेशायेत्येवमादिना म-न्त्रेण।

५. माध्यन्दिने सवने एतावान्मन्त्रविकारः।

६. त्रिष्टुभे जगत्या इति नोक्रमदिलार्थं ककारस्य।

७. इतरयज्ञकारिणमध्वर्युमितरो ऽध्वर्युर्मृतमिच्छन्प्राजापत्या-भिस्तिसृभिर्ऋग्भिः प्रातःसवने आज्याहुतीर्जुहुयात्। अस्वामिको ऽपि वचःफलवचनात्[2]।

८. होतारं मृतमिच्छन् होता माध्यन्दिने सवने प्राजापत्या-भिस्तिसृभिराज्याहुतीर्जुहुयात्।

---

१. C D. ॰पेक्षत्वं। २ A. वचः फलं च वचनात्।

९. उद्गातारं मृतमिच्छन् तृतीयसवने उद्गाता प्राजापत्याभिस्तिसृभिराज्याहुतीर्जुहुयात् ।

१०. ब्रह्माणं मृतमिच्छन् प्राजापत्याभिस्तिसृभिस्तिस्र आज्याहुतीरनुसवनं ब्रह्मा जुहुयात् ।

११. यजमानं मृतमिच्छन् प्राजापत्याभिस्तिसृभिस्तिस्र आज्याहुतीरनुसवनं यजमानो जुहुयात् ।

१२. सर्वानितरानृत्विज इतरयज्ञस्थान् मृतानिच्छन्तः सयजमानकान् सर्वे सयजमानकाः[१] । प्राजापत्याभिस्तिसृभिस्तिस्र आज्याहुतीरनुसवनं जुहुयुः ।

१३. संसवे उभे बृहद्रथन्तरे कुर्यादिति वचनात् । संसवापन्नाः कुर्युः ।

१४. आभीकादीनां साम्नामुपदेशः । एतेषु सत्सु कयाशुभीयादीनि कथं नाम स्युरिति ।

१५. कया शुभा सवयसः सनीळा इति मरुत्वतीयं भवति । प्रक्रान्तनिवृत्त्यर्थं मरुत्वतीयादीनां ग्रहणम् ।

१६. यो जात एव प्रथमो मनस्वानिति ।

१७. ममाग्ने वर्च इति ।

१८. यदि प्रथमाः संस्थापयेयुरितरे तत उत्तरां संस्थां कुर्यात् । अग्निष्टोमे प्रक्रान्ते उक्थ्यादिकम् ।

---

१ A inserts between स and यजमानकाः the following passage: पूर्वं प्रातरनुवाकमिति संशयदोषनिरासार्थं । प्रथमारम्भकाः परेषां वचनात् पूर्वं प्रातरनुवाकारम्भकालःप्रवृत्तौ विदितवन्तोऽपि द्वेष्टारः प्रातरनुवाकारम्भं करिष्यन्तीति मत्वा ततः पूर्वमेवमन्त्रानिति प्रातरनुवाकारम्भं कृत्वा समापनकालात् पूर्वमेव समापयेयुः ।

१९. तस्यैवाक्तो ऽभ्यासेन द्विराचकरणम्[1]। विशेषणानुपदेशादन्यः सोमः क्रेतव्यो ऽधरकारत्वात्। तत्रानुक्रयणाप्यायनप्रणयनानि सांनिपातिकानि कर्तव्यानि सहोचाप्यकृतत्वात्। सोमस्यैव केवलस्य प्रणयनं। तत्राग्नेयीरुप प्रियमिति चोद्धरेत्[2]। यथासवनविधि पश्चावाग्नीध्रप्रणयने[3] सोमो जिगाति गातुविदित्येवमादिनां प्राक्परिधानीयायाः उद्धारः। तत्र चाग्नीध्रसमीप एव परिधानं प्राङ्मुखस्यार्थस्य परिसमाप्तत्वात्। एवमिहापि यावदर्थं कर्म। नैवाचारगणधर्मो भवति निमित्ते कर्मान्तरत्वात्। आग्निधां निर्वपणमेव समाप्त्यपेक्षितत्वात्। समिष्टयजुरन्तं च पूर्वपूर्वमध्वरक्लृप्तत्वात्[4]।

२०. संस्रवधर्मरक्षितं प्रक्रान्तशब्दाभिधायकमध्वरभ्यासेनाध्वरान्तरं मुख्यद्रव्याभावे प्रतिनिध्यनुष्ठेये संस्रवाध्वनि तस्याभ्यासः तादृशस्यैवाभ्यासो न युज्यते। प्रतिनिधौ तत्कालादिति न्यायात्। तेन पूतीकैरनुष्ठीयमाने संस्रवाध्वनि तस्याभ्यासः सोमेनैव न पूतिकैः।

२१. वाशब्दः पक्षान्तरे। तस्यामग्निष्टोमादिकायां संकल्पितायां संस्थायां भूयसीः संकल्पितयज्ञचोदिताभ्यो बहुतरा दक्षिणा दद्यात्।

२२. स्रवन्त्यो वा विहरन्ति। स्रवन्त्य आपो नदीतडागादिस्थाः संस्रवन्त्यो विहरन्ति। विच्छिन्दन्तीत्यर्थः। तासुर्वान्तरावती विहरन्त्याकाशस्थेति वा संस्थानं भावयेत्। चकारः सर्वत्र विहिताणामनित्यस्य प्रापणार्थः।

---

१ A C D M ०राचं क०। २ C M शे०। ३ A यथासवनविधि० M यथा स च विधिवप०, C D यथासवनि०। ४ C पूर्वं D om· once पूर्वं।

६.

१. क्रीत इति विशेषणादक्रीतापहारे चोदितकालस्यातिक्रमणमपि[1]। सोमभावे सर्वास्ववस्थासु करिष्यमाणप्रयोजने। अपहृत इत्यपशब्दाद्दृश्यमाने विनाश्यपहरणेन। अमेध्यसंसृष्टे[2] तु शक्ये अमेध्यापनयने शुद्धिः कार्या।

यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृतः।
तावन्मृद्वारि वादेयं सर्वासु द्रव्यशुद्धिषु॥ इति

सर्ववचनात्। अभिषुतेषु दुष्टे परित्यागो ऽपहृतवच्च कर्म। अन्यमाहृत्येत्यन्यस्याहरणमात्रम्। न क्रयः। अभिषुणुयादिति प्रागभिषवात्क्रीतापहृतस्य लब्धस्यापि तेन सह समुच्चयः। उभयोः संस्कृतत्वात्।

२. सोमाहरणशालिने मूल्यनिरपेक्षयापि सोमविक्रयिणे वा मूल्यार्थिने किंचिद्दद्यात्। न तु शास्त्रीयम्।

३. यजेतेति वाक्यशेषः। अभिषुणुयादिति यागचोदनानुवर्तत एव। अनुपलभ्यमाने सोमे पूतीकादीनभिषुत्य यजेत्[3]। पूतीका रोहितहृणायाणि[4]। अर्जुनो ऽपि तृणजातिरेव। तत्पुष्पाण्यपि शुक्लानि।

४. तृणानां पूर्वोक्तानां यागसाधनानामभिषुतानामयं संस्कारः। प्रतिदुहा क्षीरेण सद्योदुग्धेन प्रातःसवने श्रीणीयात्। मिश्रयेत्। शृतेन क्षतातञ्चनेन माध्यन्दिने श्रीणीयात्। दध्ना तृतीयसवने।

---

१ All MSS. कालाया॰ or कालाया॰। २ A ॰सृष्टे तु शक्ये। ३ A वा यजेत। ४ M रोहिंत॰, C रोहिण॰ (?) D रोहित॰।

५. एका स्तोगौर्देया । दक्षिणाग्रहणात् प्राकृतस्य दाक्षिण्यस्य निवृत्तिः । अवभृथादुदेत्य तदन्तं कृत्वा पुनर्दीक्षेत ताद्रूप्येणैव कल्पेन ।

६. तच तस्मिन् पुनर्यज्ञे प्रक्रान्तक्रतुदक्षिणा दद्यात् । पुनर्यज्ञो ह्येष तत्र क्रतुप्रायश्चित्तिरिति[1] शतपथश्रुतेः (४. ५. १०. ६) । एकस्यामपि स्वाकृतौ पूतीकादिभिः कृतायामेतत्प्रायश्चित्तम् । अनेकयागाभ्यस्तो ह्येतदेकमपूर्वं सोमेन यजेतेति चोदनैक्यात् ।

७. दुष्टे ऽपि कुर्यादिति वाक्यशेषः ।

८. सोमाभावे पूतीकादि यदुक्तं तत्र दाक्षेनाभावे । पञ्च गा दक्षिणां दद्यादित्ययं विशेषः । शेषं पूर्ववत् ।

---

७.

१. प्रातःसवनात्सोमो ऽतिरिच्येत । ततो वक्ष्यमाणं कर्म ।

२. अस्ति सोमो अयं सुत इति स्तोत्रियः । आम्नायक्रमेण उत्तरो ऽनुरूपः । स्तोत्रग्रहणं पूर्वचाधिकारविच्छेदात् ।

३. वक्ष्यमाणाभिरन्याभिश्चैवंदेवताभिः[2] सह स्तोत्रियानुरूपाभ्यां सोमातिशंसनम् । ऐन्द्रावैष्णवीभिरिति सहार्थे तृतीया ।

४. विष्णोः कर्माणि पश्यतेति नैघण्टुके[3] ऐन्द्रावैष्णव्युक्ता । अन्यथाप्येवं स्वरूपस्य परिग्रहः । कथं नाम स्यादिति ।

५. इन्द्रमिद्गाथिनो बृहत्सूक्तम् । अतो देवा अवन्तु न इति स्तवचः एताः सूक्तासंभवात्[4] ।

---

१ A om. क्रतु॰ । २ C D ॰भिश्चैवंदेवताभिः । ३ A ins. ऐन्द्रे । ४ A स्तासंभ॰ ।

६. अतो देवा अवन्तु न इत्येतस्य वरुणस्योत्तमया परिधाय विष्णोः कर्माणि पश्यतेत्येतया यजति।

---

८.

१. वक्ष्यमाणं कर्म। सोमाधिकारो होत्रग्रहणं चानुवर्तते।

२. बण्महाँ असि सूर्येति स्तोत्रियः प्रगाथः। उत्तरो ऽनुरूपः।

३. त्रिष्टुबर्थं वचनम्। अस्येदु मातुः सवनेषु सद्य इत्येका। दिवो न तुभ्यमन्विन्द्र सत्रेत्येका। सं वां कर्मणा समिषा हिनोमीत्यष्टौ। उरुं यज्ञाय चक्रथुरु लोकमिति तिस्रः। सूक्तमेव गायत्र्यः। एताः क्वचिवत्। अर्यमा वरुणश्चेति पन्थामित्येका। वर्धान्यं विश्वे मरुतः सजोषाः। प्रोतये वरुणं मित्रमिन्द्रमित्येते विकल्पिते।

४. या विश्वासां जनितारा मतीनामिति यद्वा इन्द्राविष्णू तत्पनयाय्यं वामित्येतयोरन्यतरा[१]।

---

९.

१. यथा पूर्वयोः सवनयोः शस्त्रं तथेहापि द्रष्टव्यम्। आग्निमारुतादतिरिक्त इति विशेषारम्भात्।

२. प्र तत्ते अद्य शिपिविष्ट नामेति स्तोत्रियः। प्र तद्विष्णुः स्तवते वीर्येणेत्यनुरूपः।

---

१ C D omit।

३. जगत्यर्थ आरम्भः। प्र वः पान्तमन्धसो धियायत इति तिस्रः सूक्तं वा। आ यो विवाय सचथाय दैव्य इत्येका। सखे विष्णो वितरं वि क्रमस्वेत्येका। तमस्य विष्णुर्महिमानमोजसेत्येका सूक्तं वा। मरुल्लिङ्गान् परित्यजेदन्यांश्च।

४. त्वेषमित्था समरणं शिमीवतोरिति।

---

१०.

१. सोम इति वर्तत एव। आश्विनं शस्त्रं समाम्नानात्। तस्मात्सोमे ऽतिरिक्ते वक्ष्यमाणं शस्त्रम्।

२. अत्र स्तोत्रियानुरूपौ प्र तत्ते अद्य शिपिविष्ट प्र तद्विष्णुरिति तृतीयसवनत्वाविशेषात्[1]। स्तोमातिशंसनायाश्विन्यः[2] प्रचुरा एव।

३. अविशेषाद्या काचित्।

४. पर्यायैरस्तुते यद्यादित्य उदियात्ततः पञ्चभिः स्तोमैः पञ्चकैः स्तोमैर्होत्रकेभ्य इति तादर्थ्ये चतुर्थी। स्तुवते छन्दोगाः।

५. आदितो ऽवच्छेद इति न्यायात्[3] आद्ये द्वे ऋचौ। आगतानामिति नोक्तं त्रिष्टुप्परिहारार्थम्। ततो मां धुरिन्द्र नामा देवतेत्युद्धार्या।

६. कर्तव्या इति वाक्यशेषः। अशस्त्वापि चतुर्दशीं त्रयोदश्या परिधानं नित्या इति वचनात्।

---

१ C D ॰सवनत्वाविशेषात्, A M ॰सवनत्वाद्विशेषात्। २ A स्तोमातिसंशेनू नायाश्वि॰। ३ A नायात्।

७. छन्दोगाः स्तुवते तथैव शस्त्रम्।

८. होत्रे वा प्रथमानां स्तोतॄणां कृत्स्नं भवति। तथैव[1] शस्त्रम्।

९. कृत्स्नस्तवनशंसने कर्तव्ये।

१०. कृत्स्नस्तवनं शंसनं च।

११. आश्विनमप्येतावत्परिमाणमभिव्योषे कार्यम्।

शतानि त्रीणि षष्ट्या च[2] व्युष्टायामाश्विनं भवेत्।
प्रत्यचाणामृचां नाम बृहतीनां च संपदा ॥१॥
प्रतिपत्त्रिर्नवोपेत्यग्निमीळे पुरो नव।
ता राजाना चतस्रस्तु ज्ञेया अग्ने कदाचन ॥२॥
यो मर्त्येष्विति चैका स्यादगन्मेति तृचः स्मृतः।
प्रगाथो ऽग्ने विवस्वत्यादेष एव ककुप्कृतः ॥३॥
एते द्वे अयमग्निः षट् त्वामग्ने द्वे तृचं पुरु।
सप्त वेदिषदे ज्ञेयास्तृचे मेति[3] जनस्य च[4] ॥४॥
अग्निं तं दश तिस्रः कः पञ्च चोत सखाशीति।
उषो भद्रेभिरा सूक्तमेकोपो रुरुचे तथा ॥५॥
प्रति स्तोमेभिरुषसं सूक्तमुषो यदद्य द्वे।
उपस्तिस्र एता उ चतस्रः स्युमन्ये दश ॥६॥
अश्विना यज्वरीरिषस्तिस्र एका न यत्परः।
दूरादिहेव यद्विंशदुदीराथां दशाष्टौ च ॥७॥
आ मे हवं नवैका नः को वामद्य चतस्रस्तु।

---

१ A तथैव। २ A षष्ठा, C षष्ठा, M षष्ठानि। ३ C ॰तृचे मेति, A तृचमेति।
४ A जनस्य षट्।

एका भात्यग्निरुषसो नासत्याभ्यां सूक्तं तथा ॥८॥
का राधसव मध्वस्तु सूक्ते सूक्ते युवोस्तथा ।
तं युञ्जाथां नवा मे हवं नासत्या पञ्चपञ्च[1] ॥९॥
युवोरु षू रथं चित्रिदेका तिस्रः समानसु ।
नव प्रति प्रियतमं तुभ्यं सूर्यादि यत्परम् ॥१०॥
अकुभियेत (?)[2] ता ज्ञेया गायत्र्येकोष्णिहा परे[3]।
अनुष्टुबुष्णिहौ च द्वे बृहत्युष्णिगनुष्टुभः[4] ॥११॥

---

## ११.

१. सत्रे गणयज्ञे वा। यदि दीक्षितो म्रियेत कथं स्यादित्यत आह।

२. दग्ध्वा निर्मन्थ्येन ग्रामिसाद्वा आहृतेन लौकिकेन वा ग्रामान्तरात्। अस्थीन्युपनह्य ततः पुत्रं[5] भ्रातरं वा दीक्षयित्वा सांनिपातिकैः संस्कृतं तेन सह यजेरन्।

३. पुत्रं भ्रातरं वा दीक्षयित्वा सह यजेरन्नित्येतन्निरासेन[6] कल्पान्तरमेतद्दाग्ध्दात्[7]। दग्ध्वास्थीन्युपनह्येत्येतदस्मिन्नपि पक्षे भवत्येव। अभिषुत्य सोमं राजानमगृहीत्वा ग्रहान्दक्षिणापरस्यां वेदिश्रोण्यां यजमानास्थिकुम्भं निधाय तस्मिन्देशे दक्षिणापरवेदिश्रोण्या देशे छन्दोगाः सार्पराज्ञीभिरायं गौरित्येताभिः परा-

---

१ C in marg. सा सोमतादृग्याहो चान्यर्थं कृतः। २ C D अकुभीष्यत। ३ A परो। ४ C D अस्मिनुष्णिहुभः। C in marg. चित्रं देवानामित्यादि याभ्यां प्रसजितवदित्यर्थः। ५ C सह। ६ C D M निरासेन। ७ C D M ॰द्वादग्ध्दात्।

चीभिरनावृत्ताभिः स्तुवते। तत्र दक्षिणतो ब्रह्मा मैत्रावरुणश्चोपविश्य स्तोत्रप्रसवं कुर्याताम्।

४. मार्जालीयसंनिधौ वा अस्थिकुम्भं निधाय सार्पराज्ञीभिः पराचीभिः स्तुवते।

५. यजमानास्त्रिः प्रसव्यं प्रदक्षिणं मार्जालीयं परियन्ति भ्रमन्ति सव्यानूरूनपाघ्नानास्ताडयन्ति[1]। सव्यैरेव पाणिभिः।

६. आद्यं गौरिति स्तोत्रदेश[2] एव प्राचीनावीती दक्षिणामुख इति शाखान्तरात्। निगदेदिति नैकस्वर्यं न गणधर्मः।

७. असंमितमपरिमितं न्यूनमतिरिक्तं वा। न प्रमाणाद्भूयः। अपरिमितेष्टके[3] ऽग्नौ श्रुतिदर्शनाद्देवरे[4] च यथा नवम्यां यथेति(?)।

८. नियमतो ऽस्मिन्नहनि भवन्ति।

९. मरणात्संवत्सरे ऽस्थीनि याजयेयुरितरे यजमानाः। अस्थिमतो याजयेयुरिति केचिदाहुः।

१०. स्तोत्रेस्तोत्रे स्तूयमाने स्तोत्रसंनिधाने ऽस्थिकुम्भं निदध्युः।

११. तद्दीयात्।

---

## १२.

१. कलशो द्रोणकलशः। पूर्वपदलोपेन। तस्मिन् दीर्घे सोममात्रे सतीति[5] शाखान्तरात्। नैमित्तिकमुच्यते।

---

१ D om. ताडयन्ति। २ A स्तोत्रशेष। ३ A चापरिमिते इष्टके। ४ D श्रुतिदर्शनादिति दैवरेव। यथा नवाभ्या यथेति। C like D, M •दर्शनादिदैवरेव। यथा नवाभ्यापथेति; in marg. ये। ५ A om. इति।

२. विधुं दद्राणं समने बहूनामित्यस्यां वषट्कारनिधनेन साम्ना[1] पृष्ठं ब्राह्मणाच्छंसिने स्तुवते छन्दोगाः। स एव स्तोत्रियः कार्यः।

३. महत्तन्नाम गुह्यं पुरुस्पृगिति। पूर्वो ऽनुरूपः शंसितव्यस्ततः स्तोत्रिय इति। संदेहो मा भूदिति हूचग्रहणम्।

४. ग्रावणीत्येकवचनमविवक्षितं। किं तत्र भवतीत्यत आह।

५. स्तवनाधीनत्वाच्छंसनस्येति सूत्रारम्भः।

६. अस्यैवोत्तरो ऽनुरूपो मह उग्राय तवसे सुवृक्तिमिति। यदि पुनः कलशदरणं ग्रावदरणं चोभे भवेतां ततः पूर्वदौर्बल्यं न्याय्यम्।

७. उभयोरपि ग्रावदरणकलशदरणयोः।

८. त्रिष्टुप् माध्यन्दिनत्वात्।

९. अभ्युन्नीतं नाराशंसमन्तःपरिधि भस्मनि जुहुयात् कृताकृतस्येत्येवमादिना मन्त्रेण।

१०. शुष्के[2] नाराशंसे वक्ष्यमाणकं विध्यपराधे नैमित्तिकम्।

११. यं यहं अघन्यं मन्त्रीयात्तस्याल्पमर्धाद्धूनमुपवाते नाराशंसे सोमचमसे ऽवनयेत्प्रजापतये स्वाहेत्यनेन मन्त्रेण।

१२. दुष्टं सोममविशेषात् नाराशंसमन्यं वा प्राजापत्याभिर्हिरण्यगर्भ इत्याद्याभिस्तसृभिरध्वर्युर्मन्त्रान्तेन [3]प्रतिमन्त्रमुत्तरार्धपूर्वार्धे उपरवाख्ये अवटे ऽवनयेत्।

१३. यस्याभिषुतस्य सोमस्योपरिष्टाद्ववर्षणं भवति तस्य भक्षणकाले यथाप्राप्तं मन्त्रमपनीय मन्त्रान्तरेणेन्दुरिन्द्रमित्यादिना

१ A साम्नो। २ A शुष्के। ३ A inserts प्रतिमन्त्रान्तेन।

भक्षणं कुर्यात्। कृत्स्नं वेदमन्तमन्वाद्यमित्यादेश्च ध्यानं युगपत् कार्यम्।

१४. हिरण्यगर्भः समवर्तताग्र इत्यनेन मन्त्रेणाज्याहुतिं जुहुयात्स्य चमसो ऽभ्युपाहृतः।

१५. उत्तरग्निवावच्छाद्येति[1] (?) छन्दोगानां। तेन वान्येन वावच्छाद्य सदसो निर्हरेदभ्युपाहृतं चमसम्[2]।

१६. य सते चिद्भिश्रिष इत्यनेन तृचेन महावीराख्यं[3] भिन्नपात्रमनुमन्त्र्य तत आहुतीर्जुहुयात्। निर्हरेत्कर्मानादिष्टत्वात्[4]।

१७. अथस्त्रिंशत्तन्तव इत्येवमादिना देवानित्येवमन्तेन मन्त्रेणैकाम्। द्वितीयां यज्ञस्य दोहो वितत इत्यादिना स्वाहाकारान्तेन मन्त्रेणैते आज्याहुती होता जुहोति। चशब्दादध्वर्युश्च। स्वशाखोक्ता।

---

१३.

१. यदीति वचनान्निमित्तं न स्वयमुत्पाद्यम्। सत्राय दीक्षितः सत्रार्थं दीक्षादिषु प्रवृत्तक्रियः। अथशब्दाद्दृढबुद्धिरपि कथंचित्सा-म्युत्तिष्ठेदपरिसमाप्तसत्रस्य तदनुष्ठानभङ्गो भवेत्। ततः सोममप-भज्य सोमं विभज्य राजानं प्रधानद्रव्यत्वेन सखिभिरङ्गीकृतं क्रीत-मक्रीतं वा विश्वजितातिरात्रेण यजेत सर्वस्तोमेन सर्वपृष्ठेन सर्व-वेदसदक्षिणेनेति विशिष्टो विश्वजिद्यागो नैमित्तिकः। सत्राङ्ग

1 A चि चा०। 2 C निर्हरेच्चमसा ऽभ्युपाहृतं। D निर्हरेच्चमसा चभ्युपा०। 3 C D महावीरपात्रं भित्रम्। 4 A ०कत्वात्, M ०कर्म नोपदि०।

चोच्यते। अनिष्टप्रथमयज्ञस्याहिताग्नेः सत्त्रिणः सामुत्थाने आग्नेयीष्टिः सर्ववेदसदक्षिणा भवति। अनाहिताग्नेराग्नेयश्चरुरित्येवं[1] केचिदाहुः।

२. संकल्प्यापि सत्त्रमकुर्वन् विश्वजितातिरात्रेण यजेत। वाशब्दो विकल्पार्थः॥

[2]उक्तो द्वादशाहः सहीनस्तद्धर्मातिदेशश्च केषांचिदह्नाम्। तदनन्तरं ते चेदनुपदिष्टं कुर्युरित्यनेनोपदिष्टानुपदिष्टप्रयोगेन नैमित्तिकान्युपदिष्टानि। तत्र द्वादशाहो ऽहर्गणः। अहर्गणानां च कानिचित्सत्त्राणि केचिदहीनाः। अस्ति तेषु धर्मभेदः। तत्र द्वादशाह उभयात्मा समाने ऽप्यहर्गणत्वे। तस्याप्यनेन विशेषेण सत्त्रत्वं। सत्त्रसंज्ञस्तु यो ऽहर्गणस्तस्य धर्मविशेषा वक्तव्यास्तानाह।

---

१४.

१. गृहपतिसप्तदशा होत्रादयो यथोपदिष्टाः[3] सत्त्रार्थमासीरन्। य ऋत्विजस्ते यजमाना गृहपतिसप्तदशाः[4] सत्त्रमासीरन्निति शाखान्तरश्रुतेः। आहिताग्नय इष्टप्रथमयज्ञा[5] दीक्षिता इत्येतदेषामेव विशेषणत्रयम्।

२. सत्त्रे गृहपतिरोधो[6] नास्ति। यथा साद्यं याजमानं च मर्यादमिति ब्राह्मणः। अशक्ये तु यौगपद्ये सति आर्त्विज्यस्यानु-

---

१ C D अनाहिताग्नेराहिताग्नेश्चरु (चरु॰ ?) २ C D om. the passage beg. with उक्तो and ending with तानाह। ३ C D यथोदिष्टा। ४ A यजमाना। ५ A ins. एवमेषतनः। ६ A गृहपदीतिरो॰, M गृहपतिः रा॰।

रोधेन क्रिया। यथा होतुरिळोपह्वानं मयीदमिति जपश्च। तत्रार्त्विज्यमिळोपह्वानं कृत्वा तस्यानुरोधेन[1] पश्चान्मयीदमिति जपः।

३. दीक्षणानुपूर्व्यं दीक्षणाक्रमः। तेषां गृहपतिः प्रथमो दीक्षेत[2] इत्येवमादिकः। तेनानुपूर्व्येण सर्वेषां यजमानानामिदमिति याजमानमार्षेयाभिव्याहरणादि।

४. परार्थानि क्रत्वर्थान्यौदुम्बरीसंमानादीनि[3] तानि मुख्यः प्रधानः कुर्यात्। स च एकः कुर्यात्। तथा च कात्यायनः[4] परार्थमेकः[5] कृतत्वादिति (१२. १. १४)।

५. केचिन्नाराशंसकल्पाः केचित्तनूनपात्कल्पाः केचित्तूभयकल्पाः[6] मन्त्रकल्पे द्वैधे[7] भूयसां यः कल्पस्तत्साधर्म्यमितरेषाम्।

६. कृतेषु दाक्षिणेष्विति सत्यमति वा[8] दक्षिणाहोमे कालावधिरयं[9]। दक्षिणापथेन दक्षिणामार्गेण। ते शालामदसो दक्षिणेनाग्नीध्रतीर्थेन कृष्णाजिनानि धून्वन्तश्चालयन्तो दीक्षिताः प्रतिदिनमेवं [10]अपेयुरिदमहमित्यादिकं मन्त्रम्।

७. उत्थाय परिसमाप्य सत्त्रमग्निष्टोमसंस्थः सहस्रदक्षिणः पृष्ठशमनीयाख्यः कार्यः। सत्त्रिणः सत्त्रादुदवसाय पृष्ठशमनीयेन यजेरन्निति शाखान्तरश्रुतेः। स काममेव पृष्ठशमनीयेन यजेत कामं न यजेत (१८. २४. २०) यदि तु यजेतैत एवास्य सत्त्रिण ऋत्विजः स्युरित्यारण्यके वचनात् पृथक्पृथक् पृष्ठशमनीय इत्येतावसीयते।

---

1 C D तस्यानुपरोधेन। 2 A प्रथमं दीक्षित। 3 C D M सम्मादीनि। 4 C D M कात्यायनः। A कृष्णायनः। 5 M एव instead of एकः। 6 C D M om. उभयकल्पाः, C (in marg.) ०भयाकल्प। 7 A मन्त्रकल्पद्वैध०। 8 A om. सत्यमति। 9 C D M ०विधिरियं। 10 A एवं नमन्तो अपेयुरिदमहं।

८. साधारणं सत्रिणामभिन्नं पृष्ठ्यशमनीयमेके मन्यन्ते। बहुवद्वः श्रुत्यनुकरणः।

९. पृष्ठ्यशमनीय प्रकृतः। स केषु नित्यः केष्वनित्य इति तद्विवेकायाह। रात्रिसत्त्रेषु नित्यः पृष्ठ्यशमनीयो ऽन्येष्वनित्यः। स काममेव पृष्ठ्यशमनीयेन यजेत कामं न यजेतेति दर्शनात् प्राह। कीदृशानि तानि रात्रिसत्त्राण्युच्यन्ते। द्वादशाहप्रभृतीनि। किय-त्पर्यन्तानि। आ चत्वारिंशद्रात्रात्। अभिविधावयमाकारः। एको-त्तराणि एकैकवृद्ध्या द्वादशरात्र इत्येवंप्रकाराणि। एकान्नपञ्चाश-द्रात्र एकषष्टिरात्र इति रात्रिसत्त्रेष्वेवानुप्रवेशात् रात्रिसत्त्राख्यां लभेते। रात्रिसत्त्राणीति ज्ञात्वानुष्ठेयानि[१]। धर्मविशेषस्तु। छान्दोग्ये संज्ञाप्रयोजनम्।

१०. व्याख्यातो द्वादशाहः प्रकृतिः सत्त्राहीनानामित्युक्तः। स यैरहोभिर्विवर्धते तानि त्रयोदशरात्रादिसंपत्त्यर्थमुदाहरिष्यामः। पृष्ठ्यशमनीयप्रसङ्गेन रात्रिसत्त्राण्युपदिदिक्षोराचार्यस्य प्रतिज्ञा।

---

## १५.

१. एकाहार्थे महाव्रतस्तोत्येवमादि यदारण्यकोक्तं तदाहरन्ति कुर्वन्ति सत्त्रिणः।

२. वाशब्दो विकल्पार्थः। सर्वस्तोमं वातिरात्रमेकाहार्थे आह-रेयुः। सर्वस्तोमो ऽतिरात्र उत्तममहरित्यश्वमेधे यो वक्ष्यते तमा-हरेयुः।

---

[१] A °ष्ठेयानि C (orig.) D ज्ञानुष्ठेयानीति।

३. सर्वस्तोमस्यातिरात्रस्य स्थाने शाखान्तरात्।

४. ऋह्वार्थे गोआयुषी आहरेयुः। के पुनस्ते गोआयुषी इत्यत आह।

५. गोआयुषी इत्येतस्यां चोदनायां द्वितीयं तृतीयं चाभिप्लविके द्वे अहनी प्रत्येतव्ये।

६. त्र्यहेणापूर्यमाणे त्रीणि प्रथमान्याभिप्लविकान्युपेयुः।

७. त्रीणि पूर्वाण्याभिप्लविकानि महाव्रतं चतुर्थमिति चतुरहार्थे।

८. आभिप्लविकानि पूर्वाणि पञ्चाहार्थे पञ्चोपेयुः।

९. अभिप्लव इति नोक्तं लाघवाभिप्रायेण।

१०. षळाभिप्लविकानि महाव्रतसप्तमानि। सप्ताहेनापूर्यमाणे सप्ताहरेयुः।

११. एतेन न्यायेन। कतमेन। यद्यदस्यमङ्गं तत्तत्पूर्वं कुर्वाणास्तां सङ्ख्यां पूरयन्ति यावा सङ्ख्या पूरयितव्या। यथा त्रयोविंशतिरात्रे पञ्चाहः षळहो द्वादशाह इति।

१२. एतेषां गोआयुषीप्रभृतीनां प्रायणीयं पृष्ठ्यं चान्तरेण स्थानमनुष्ठानक्रमः।

१३. एकाहार्थे महाव्रतमाहरन्तीत्युक्तं। तस्यायं स्थाननियमः। तुशब्दो ऽवधारणार्थः।

# १६.

१. अथशब्दो विशेषाधिकारार्थः । एतानि वक्ष्यमाणान्यहानि यथोक्तां न्यायक्लृप्तिमपवदन्ति ।

२. विंशतिरात्राख्ये अभिप्लवः षलहः अभिजिद्विश्वजिच्च । एतान्यागमस्थानि प्राक् पृष्ठ्यात्ततो दशरात्रः ।

३. अभिप्लवः षलहस्ततो ऽतिरात्रस्ततो द्वावभिप्लवौ प्रथमद्वितीयौ । अबुभ्रमु त्य इति वैश्वदेवं (११.८.७) षष्ठस्याह्नो द्वितीये ऽभिप्लव इत्यनेन द्वितीयेन विशेषेण द्वितीयः । एवमेतान्यूनविंशतिरहानि[1] प्रायणीयोदयनीयसहितानि एकविंशतिरात्रः पूर्वः ।

४. पृष्ठ्यः षलहः स्वरसामानस्त्रयस्ततो विषुवान् तत आवृत्ताः स्वरसामानः ततस्त्रयस्त्रिंशारम्भण इति । त्रयस्त्रिंशमारम्भणं प्रथमं[2] । यच्छेषाणि पञ्च । तेनैव प्रातिलोम्यक्रमेण स एवमुच्यते त्रयस्त्रिंशारम्भणः पृष्ठ्य इति । अयं प्रायणीयोदयनीयाभ्यां सहैकविंशतिरात्र उत्तरो ऽभिधीयते । अहो ऽभिप्लवो महाव्रतं चेति द्वादशाहसहितानीति द्वाविंशतिरात्रे तु क्लृप्तिः । पञ्चाहो ऽभिप्लवश्च द्वादशाहसहितानीति त्रयोविंशतिरात्रे तु क्लृप्तिः ।

५. इति चतुर्विंशतिरात्रः संवत्सरमयनमित्याचक्षते । इति सूत्रच्छेदः । सूत्रशेषस्तूच्यते । पृष्ठ्यस्य ये स्तोमास्त्रिवृदादयस्ते स्तोमा

---

[1] C D एवमेतानि न्यून० ।  [2] A त्रयस्त्रिंशारम्भण इति प्रथमं ।

यस्य सो ऽयं पृष्ठ्यस्तोमः षळहः। स्तोमा एव न तु तानि पृष्ठानि। परिसंख्यानात्। तेनायं न्यायतो बृहद्रथन्तरपृष्ठो भवति।

६. षळहानन्तरं त्रयस्त्रिंशस्तोमकमहः षष्ठं पार्ष्टिकमनिरुक्तताविशिष्टं कार्यम्। अहरतो न तद्विधीयते न षष्ठस्याह्नो गुणविधिः। अनिरुक्तता च पूर्वकारिवशात् कार्या। एवं स्वरूपाभिधानं। तदनिरुक्तं भवतीत्यभितष्टीयं[1] देवतायाः परोक्षाभिधानेन स्वश्रुतौ (२८. ७) प्रदर्शितम्।

७. तस्य त्रयस्त्रिंशस्याह्नः अनिरुक्तस्य कण्वरथन्तरं माध्यन्दिने छन्दोगाः कुर्वन्ति। तत्र योन्यनुशंसनं कार्यम्।

८. वचनाच्छेषं पूर्वेण तुल्यं। न तु[2] कण्वरथन्तरं तस्येति पूर्वत्र यत्नात्।

९. ततस्त्रयस्त्रिंशान्निरुक्तादनन्तरं त्रिणवस्तोमकमहः।

१०. एकविंशस्तोमं वैराजपृष्ठं चतुर्थमिति। तदेव केनचिदभेदेन[3] द्विलयुक्तम्।

११. एकविंशयोः पुरस्ताच्चोपरिष्टाच्च।

१२. यथोक्तं पूर्वत्र तथा त्रिणवादनन्तरमेतावान्विशेषः।

१३. [4]पूर्वत्र पृष्ठ्यस्तोमात्षळहादुत्तरमिह तु त्रयस्त्रिंशान्निरुक्तादुत्तरमेतावान्विशेषः।

---

१ C (orig.) D अभितष्टीयं C (sec. h.) अभितष्टीय। २ C D M तत् instead of तु A यत्नात् C M ॰यत्नात्। ३ C D M अभेदद्विलयुक्तं। ४ A om. Sûtra 13 and gives the words from पूर्वत्र to विशिष्यते as explanation to S. 14.

१४. त्रयस्त्रिंशारम्भण इत्येतावता विशेषेण पूर्वस्मादयं विशिष्यते।

१५. ततः पञ्चाहानन्तरं त्रिवृत्स्तोमकमहर्दशरात्रिकमनिरुक्तं भवति।

१६. अनिरुक्तात्त्रिवृत्स्तोमकादनन्तरो ज्योतिष्टोमो ऽग्निष्टोमः कार्यः।

१७. इत्येतेनाहर्योगेनायं चतुर्विंशतिरात्रः संसदामयनाख्यः। प्राक् त्रयस्त्रिंशद्रात्रादहर्योगः परिभाषानुसारेणोच्यते। द्विरभिप्लवो महाव्रत इत्यागन्तूनि पञ्चविंशतिरात्रे गोआयुषी अभिप्लवो द्विरित्यागन्तूनि षड्विंशतिरात्रे। अहो द्विस्त्राभिप्लव इत्यागन्तूनि सप्तविंशतिरात्रे[1]। अहो द्वावभिप्लवौ महाव्रतं चेत्यागन्तूनि अष्टाविंशतिरात्रे[2]। पञ्चाहो द्वावभिप्लवावित्यागन्तून्येकान्नत्रिंशद्रात्रे[3]। त्रिरभिप्लवा इत्यागन्तूनि त्रिंशद्रात्रे। त्रिरभिप्लवो महाव्रतं चागन्तून्येकत्रिंशद्रात्रे। गोआयुषी त्रिस्त्राभिप्लवा इत्यागन्तूनि द्वात्रिंशद्रात्रे।

---

## १७.

१. [4]आभिप्लविकान्यहानि पञ्च त्रिरावृत्तान्युपेत्य ततो विश्वजिदतिरात्र उपेयः[5]। तत एष एवाभिप्लविकः पञ्चाहस्ततो दशरात्र

---

१ A पञ्चविंशति०। २ A एकविंशरात्रे त्वष्टाविंशति०।
३ A एकत्रिंशद्रात्रे। ४ A ins. इति। ५ C D उपेयाः।

इत्येतेनाहर्योगेन चयस्त्रिंशद्रात्राख्योऽतिरात्रसत्त्रविशेषः[1]। प्राक् सप्तत्रिंशद्रात्रादहर्योग उच्यते। पारिभाषिक एव। त्रीण्याभिप्लविकानि त्रयश्चाभिप्लवा महाव्रतं चेत्यागन्तूनि चतुस्त्रिंशद्रात्रे। पञ्चाहश्चाभिप्लवास्त्रय इत्यागन्तूनि पञ्चत्रिंशद्रात्रे। चत्वारोऽभिप्लवा आगन्तुत्वेन षट्त्रिंशद्रात्रे।

२. चतुर्विंशमहस्ततोऽभिप्लवः षळहस्ततः पृष्ठ्यः षळहस्ततो नवाहो नवरात्रो यो वक्ष्यते। अभिजित्स्वरसामानो विषुवानावृत्ताः स्वरसामानो विश्वजिच्चेति। अत्रापि तेष्वेवाभीवर्तान्वायतनं संवत्सरसंमित इति वचनात्। ततो गोआयुषी। तदनन्तरो दशरात्रस्ततो महाव्रतमित्येष सप्तत्रिंशद्रात्रः। त्रयाणामहर्योग उच्यते। परिभाषान्यायेन गोआयुषी चतुरावृत्तोऽभिप्लव इत्यागन्तून्यष्टत्रिंशद्रात्रे। अहश्चतुरावृत्तोऽभिप्लव इत्यागन्तून्येकान्नचत्वारिंशद्रात्रे[2]। अहश्चतुरावृत्तोऽभिप्लवो महाव्रतं चेत्यागन्तूनि चत्वारिंशद्रात्रे।

३. संवत्सरसंमित इति सूत्रान्तः। खण्डशस्तु व्याख्या क्रियते। चतुर्विंशाख्यमहस्ततस्त्रयोऽभिप्लवास्ततो नवरात्रो वक्ष्यमाणकः।

४. अभिजिदादयो यथादिष्टक्रमसमुच्चिता नव।

५. संज्ञाकरणं शास्त्रसंव्यवहारार्थम्। अभितो[3] नवरात्रं (१३. १८. २) चेत्येवमादयोऽपदेशाः।

६. अभिप्लवो नवरात्रानन्तरम्। गोआयुषी अभिप्लवानन्तरम्। दशरात्रो गोआयुर्भ्यामनन्तरं महाव्रतं दशरात्रानन्तरम्।

---

१ A रात्रिसत्त्रवि॰ C D ऽतिरात्रिसत्त्रवि॰ M ऽतिरात्रविशेषः।

२ A षड्विंशद्रात्रे। ३ A C D अभिजितो।

७. चतुर्विंशं चयो ऽभिप्लवा इत्यारभ्य य उक्तो ऽसावेकान्न-पञ्चाशद्रात्रो ज्ञेयः।

८. संवत्सरसत्त्रेण तुल्यतामापादितः। संवत्सरसत्त्रधर्मैर्युक्त इत्यर्थः। तत्र उच्यन्ते दीक्षासङ्ख्याकालविशेषाः। अबुध्नम् त्य इत्येव-मादयश्च वैश्वदेवविशेषा अनारभ्यवादसिद्धाः[१]। अभीवर्तान्वायातनं विषुवति अष्टासामाभिप्लवस्याम्नयमावृत्तिः। यज्ञागाराणां दारु-विकल्पः[२]। अनूबन्ध्यावपान्ते (का० १२. ४. ६) वपनं। पूर्णाहु-त्युदवसानीययोर्भेदेन करणम्। पयस्यायाश्च। साग्निके यश्च[३] पृष्ठ-शमनीयो विकल्पेन रात्रिसत्त्रेषु नित्यः। तेषु नित्यो द्वादशाह (१२. १४. ९) इति। यत्र तु कृतानग्नीन्विभजन्ति। अन्येषु तु सत्त्रेषु प्रागग्निहोत्राहुतेरग्निविभागः। एवमाद्यर्थं संवत्सरसंमित इत्युक्तम्।

---

## १८.

१. अथशब्दाद्वक्ष्यमाणको विशेषः। शेषं पूर्वेण समानम्। एकषष्टिरात्रे विधिं वक्ष्याम इति वाक्यशेषः।

२. अभिजित्प्रभृति नवरात्रमभितः पृष्ठ्यौ कर्तव्यौ।

३. तयोः पृष्ठ्ययोरात्मत्रयस्त्रिंशादारभ्य प्रतिलोम उत्तरः।

४. वक्ष्यमाणः शतरात्रो ऽनूद्यमानो न्यायकॢप्तः। किमस्यानु-

---

[१] O D °वादसिद्धा। [२] O दारुदारु। [३] A °के यश्च।

वादस्य प्रयोजनं। संवत्सरसंमितधर्मप्राप्तिः[१]। एतस्माच धर्मभेदाच-त्वारिंशद्रात्राद्रात्रिसत्त्राणीत्युक्तम्[२]।

५. प्रथम आभिप्लविकस्त्र्यहः पुनश्चतुर्दशाभिप्लवास्ततो दश-रात्रस्तदनन्तरं महाव्रतमित्येवं प्राप्तः शतरात्रः।

---

१९.

१. गवामयनं नाम वक्ष्यमाणकं संवत्सरसत्त्रम्। तस्य सप्तदश दीक्षाः कर्तव्याः।

२. द्वादश वा गवामयनस्य दीक्षा भवन्ति। तुल्यकल्पार्थं पृथग्योगकरणम्।

३. तैषः पौषः। तस्य यामावास्या तां लोका मार्गशिरस्यो ऽमावास्यामाहुः। कृष्णपक्षादिमासाङ्गीकरणेन सा तैषस्य भवति। ज्योतिषामयने ऽपि क्वचित्कृष्णपक्षादिमासाङ्गीकरणमस्ति। स्वश्रु-तिलिङ्गानि च विद्यन्ते। अतस्तस्या अमावास्याया उपरिष्टादेका-हेन ते दीक्षेरन् द्वितीयायामित्यभिप्रायः। माघस्य वेति विकल्पः कृष्णपक्षादिमासाङ्गीकरणेनैव[३]।

४. तेषां दीक्षितानां माघस्यामावास्यायामुपवसथः पौषशुक्ल-पक्षप्रवृत्तानाम्। फाल्गुनस्य वा माघशुक्लप्रवृत्तानां। एवमेव श्रुत-त्वात्। नियमार्थं चैतद्वचनं। प्रतिपदि स्यात्तदमावास्याविशेषात्।

---

१ A संवत्सरधर्मसंमितप्राप्तिः। २ A om. त्रात्रा। ३ C D ०करणेनैव।

ततो ऽवमरात्रे[1] ऽत्यावश्यिष्टे पूर्वं पातयित्वा दीक्षारम्भः। कुहेयं(?) पर्व चेत्पाद[2] इति सांवत्सराः।

५. यदि द्वादश दीक्षा अङ्गीकुर्वन्ति ततः पौर्णमास्याः पुरस्ताच्चतुरहे दीक्षेरन्नेकादश्यां दशम्यां वावमरात्रे सति।

६. तेषामेकादश्यां दशम्यां वावमरात्रपक्षे दीक्षां प्रारभमाणानां। श्रौतत्वस्य शुक्लपक्षस्येत्यर्थः। पञ्चम्यां प्रथमः सुत्याकालः।

७. अहर्योगक्रमार्थो ऽनुवादः।

८. तदनन्तरम्। चशब्दः समुच्चयार्थः। तेन तथा युक्तान्पञ्च मासानुपेत्येत्यत्रानयोरङ्गोर्यहणं[3] न भवति।

९. पृष्ठ्यः पञ्चमो येषां त इमे पृष्ठ्यपञ्चमा अभिप्लवाः। तेन-तेन क्रमेण सत्रिण उपयन्ति।

१०. प्रायणीयादारभ्य एवमहर्युक्तः प्रथमो मासः। स इति विशेषणाच्चेतरे।

११. तथा युक्तान्। कथं युक्तान्। पृष्ठ्यपञ्चमाभिप्लवयुक्तान् पञ्च मासान् प्रथमं द्वितीयं तृतीयं चतुर्थं पञ्चममिति। एतानुपेत्य कृत्वेत्यर्थः।

१२. षष्ठस्य मासस्याहर्योग उच्यते। पृष्ठ्यचतुर्थान् त्रीनभिप्लवानुपयन्त्यनेन क्रमेण।

१३. ततश्चतुर्भ्यः[4] सप्तकेभ्यो ऽनन्तरं नवरात्रमनेन विभागेनोपयन्ति। अभिजितं त्रींश्च स्वरसाम्नस्ततो विषुवन्तम्। एवमयं

---

[1] M ऽवरात्रे, C अवमरात्रि। [2] M विचार्यं पर्वचेत्पाद। [3] C D •पेत्येतेनयोर्। [4] C D M चतुर्भ्यः।

प्राग्विषुवतो ऽष्टाविंशौ मासः। विषुवांस्तु तावदनधिक एवास्ते। नावरेषां न परेषामित्याहुरिति[1] (कौ० २६.१) श्रुतेः।

१४. पृष्ठ्यारम्भमाभ्यामूर्ध्वं विश्वजितश्चतुरश्चतुरो ऽभिप्लवानुपयन्तीति श्रुतेः।

१५. पृष्ठ्याभिप्लवौ चान्यत् ऋतुस्तोमाद्यर्थयोगेन पृष्ठ्यादारभ्य प्रातिलोम्येनावर्तेते। चकारः समुच्चयार्थः। अतश्च मासावृत्तिरव्यर्थयोगावृत्तिश्चोभयं भवति।

१६. अनुष्टुप् त्य इत्येवमादीनि यान्युक्तानि षडहस्याह्नो द्वितीये ऽभिप्लव इत्येवमादिना ग्रन्थेन तान्यावर्तन्ते। चतुर्थतृतीयद्वितीयप्रथममिति।

१७. विषुवतो ऽगणितादूर्ध्वमावृत्ताग्नरसाभ्यो विश्वजितं चोपेत्य ततः[2]पृष्ठ्यांश्चतस्त्रीनभिप्लवान् च मासो ऽष्टाविंशौ। अष्टाविंशिनावभितो विषुवन्तं मासाविति (कौ० २६.२) श्रुतेः।

१८. एवमियमावृत्तिः। पृष्ठ्यप्रथमैर्मासैः। य एष पृष्ठ्यः षडहः स्रुवः परस्तात्पर्येति तेन मासा आवृत्ता इति यद्न्म इति (२६.१) श्रुतेः। एवमेते द्वितीये पटले पञ्च मासा उक्ताः। षष्ठ उच्यते।

१९. त्रीनभिप्लवानुपयन्ति पूर्ववदन्त्यमासवत्ताम्। आयुर्गामिति यथोद्दिष्टौ[3] न क्रमेण। ततो दशरात्रं। ततो महाव्रतं तत उदयनमतिरात्रम्।

---

१ C om. न परेषाम्। २ A ततः ष्ठ्या षडहा न०। ३ M यथोपदिष्टेन C यथोद्दिष्टौ।

२०. अत्र च गवामयनस्य दीक्षा इत्येवमादिको ग्रन्थः। अश्रुत्या तावदेवं पूर्वकारिवशादन्यथापि भवतीति सूत्रारम्भः।

२१. तदिति सर्वनाम्ना गवामयनं निर्दिश्यते। गवामयनप्रकृतीनि संवत्सरसत्त्राणि भवन्ति।

२२. तेषु संवत्सरसत्त्रेषु विकारो वक्ष्यमाणोऽन्यत्र दशरात्राद् द्रष्टव्यः।

२३. दशरात्रेयः पृष्ठ्यं वर्जयित्वान्यस्य स्थाने[1] ऽभिप्लवः कार्यः। तदेवंयुक्तमभिप्लवायनं नाम संवत्सरसत्त्रम्। चतुर्थादीनि वैश्वदेवानि सप्तमे मासे। पञ्चमादीन्युत्तमे। आदितो ऽवच्छेद इति न्यायात्।

२०.

१. उत्सर्गिणामयनं नाम संवत्सरसत्त्रं गवामयनधर्मप्राप्ति। तत्र विधिं वक्ष्यामः।

२. यानि गवामयनप्रकृतेः पौर्णमासीभिः सह सुत्यान्यहानि संगच्छेयुस्तान्युत्सृजेरन् सत्त्रिणः। पौर्णमासीशब्दो ऽयं यजमानाया-चर्वचन[2] उत्तरसूत्रे कर्मनिर्देशात्।

३. वाशब्दो विकल्पार्थः। दर्शपूर्णमासाभ्यां यजनीयदिवसाभ्यां[3] सह यान्यहानि संनिपतेयुस्तान्युत्सृजेरन्।

---

१ A om. the first six words. २ A ॰शब्दो याजमानीयावचन।
३ C यजनान ... य दि। sec. h. यजनी D has lacuna between या-य M यजमानाय। A यजनी।

४. उभयोरपि कालकल्पयोरविशेषादेकत्रिकं स्तोमं[1] कुर्वीरन्।

५. [2]वाशब्दो विकल्पार्थः।

६. एकैकां त्वचं स्तोत्रियाणां वोत्सृजेरन्[3]।

७. यजुषां चैकैकस्योत्सर्गः। आध्वर्यवस्योपदेशः। एकैकस्य प्रतिगरस्योत्सर्गार्थः।

८. अहरुत्सर्गपक्षे तस्मिन्नहनि प्राजापत्यः पशुः कार्यः।

९. तस्मिन्नहन्युत्सृज्यमाने यद्देवतः सवनीयस्तेन वा यजेरन्।

१०. तत्र तस्मिन् पशौ पशुतन्त्रे सवनीयहवींष्यन्वायातयन्ति। पशुतन्त्रवचनाद्वपापशुपुरोडाशहवींष्यन्वायातयन्ति। तस्य वपया प्रचरन्ति। ततः सवनीयेनाष्टाकपालेन। तत आग्नेयेनाष्टाकपालेन। ततश्चरुणैन्द्रेण। तत्प्रातःसवनं संतिष्ठते। पशुपुरोडाशेन प्रचरन्ति। ततः सवनीयेनैकादशकपालेन। ततो मरुत्वतीयेनैकादशकपालेन। ततो दध्नैन्द्रेण। तन्माध्यन्दिनं सवनं संतिष्ठते। पशुना प्रचरन्ति। ततः सवनीयेन द्वादशकपालेन। ततो वैश्वदेवेन द्वादशकपालेन। ततश्चरुणाग्निमारुतेन। तत्तृतीयसवनं संतिष्ठते। इति छन्दोगानां। तैत्तिरीयाणामध्वरकल्पे वैश्वानरेषु[4] सवनीये च पशुपुरोडाशे[5] लेकस्मिन्सवनीये होता यक्षदिन्द्रमिन्द्रस्याप्रपुरोडाशमिन्द्र प्रस्थितं

---

१ A om. अपि कालकल्पयोर्। २ The words of the text एकैकां वा स्तोत्रियाणामुत्सृजेरन् ऋचाणां यजुषां च formed orig. one Sūtra in A, but have been disjoined in three. In M they form three Sūtras, in C D ५ and 6 form one Sūtra, which in C has been alt. by sec. h.

३ A om. च। ४ A,C (orig.) D वैश्वानेषु। ५ A M °पुरोडाशो ले. C °शो लै। sec. h. ले D पशुपुरोडाशे लैक°।

शृणाणो वेत्विति। न यथासवनीयवितारणं[1] सवनाभावात्। संतिष्ठत इत्यर्थवादः पशूपदेशात्। इमं नु मायिनं हुवे स यो वृषा वृष्ण्येभिः समोका इति मरुत्वतीयस्य याज्यापुरोनुवाक्ये मन्त्राम्नाये दृष्टे एव[2]। दध्नः प्रति त्यं चारुमध्वरमित्याग्निमारुतस्य पुरोनुवाक्या यदुत्तमे मरुतो मध्यमे वेति याज्या।

११. तेषां सवनीयानां वा तदाख्यानां स धर्मो भवति यः पशुतन्त्रे चोद्यमानानाम्। कस्मात्। न निगमाः सन्ति। पशुतन्त्रे चोद्यमानानामिति सूत्रारम्भे यथैते सवनीयहविर्देवतानिगमाः प्रैषे च तथैव स्युरिति।

१२. परस्तादह्नो ये स्तोत्रियास्ताननुरूपान् कुर्वीरन्नह्न[3] उत्सृज्यमानस्य।

१३. यथार्थमतिप्रैषो दृष्टे सुत्यामग्नीदिति।

१४. उत्थायेति वचनात् पृष्ठ्यशमनीयमकृत्वा। चशब्दाद् द्वादशाहान्ते पृष्ठ्यशमनीयं च।

१५. उभयोः पौर्णमास्यमावास्या उत्सृजमाना उत्सर्गिणामयनं समाप्य[4] संसदामयनमुपेयुः। संयोगाद् व्यवतिष्ठत इति (१.१.५) सिद्ध उभयोरुत्सृजमाना इति वचनादितरयोरपि पक्षयोरेकत्रिकं वेत्यनयोर्द्वादशाह एव।

---

१ A वीतारणं In C the words from वितारणं to पशू are bracketed by sec. h. २ A om. दृष्टे एव। ३ A °ग्राह्वस्तस्य° C °रह्नि। तैलस्य M °स्तोत्रकस्य। ४ C M om. उत्सर्गिणामयनं समाप्य D om. the text from उत्सर्गिणा° to इति वचनाद्।

२१.

१. आदित्यानामयने संवत्सरसत्त्रे वक्ष्यमाणको विकारविधिः।

२. एकस्मिन्नहनि त्रिवृत्परस्मिन्नहनि[1] पञ्चदशः। एवमहर्व्य-त्यासः। पूर्वस्मिन्पटले प्राग्विषुवतः पटले ऽहःसमुच्चये इत्यर्थः[2]।

३. अभिप्लवस्तोमाविति वर्तते। विषुवत उत्तरस्मिन् पटले पञ्चदशत्रिवृतौ स्तोमौ। पूर्ववद्व्यत्यासः।

४. मध्ये पृष्ठ्याः पार्श्वयोरभिप्लवा इत्येवंरूपा मासाः।

५. षष्ठे मास्यभिप्लवत्रयं कृत्वा ततः पृष्ठ्यमुपयन्ति नवरात्रं च पाठक्रमेण।

६. नवरात्रे यो ऽभिजित् तस्य स्थाने बृहस्पतिसवम्। बृह-स्पतिसवेन्द्रस्तुतावभिजिद्विश्वजितोः स्थान इत्यैतरेयिणाम्।

७. विश्वजितः स्थाने इन्द्रस्तोमम्।

८. इन्द्रस्तुतो ऽनन्तरं पृष्ठ्यमुपेत्याभिप्लवः पृष्ठ्यादनन्तरम्[3]।

९. उपप्रयन्तो अध्वरमित्याज्यं व्यूह्य इत्येवमादिभिर्विशेषैर्य उक्तो नवरात्रः सह दशमेनाह्ना स उच्यते व्यूढच्छन्दा दशरात्रः। शाखान्तरीयो वा यथावचनं छन्दसां व्यभिचारेण।

१०. संस्थान्तरे पशुप्राप्ते[4] नियमः।

११. देवा वै पशुकामा इत्येवमादिनोद्भिदुक्तस्तदनन्तरञ्च[5] बलभित्। तावुद्भिद्बलभिदौ यथोद्दिष्टौ दशरात्रादनन्तरमुपयन्ति।

---

१ C D M om. परस्मिन्नहनि C in marg. परस्मि। २ M प्राग्विषुवतः समुच्चय इत्यर्थः। ३ A C D om. म्। ४ A प्राप्ते। ५ A च instead of चञ्च।

१२. सप्तमं मासं यथोक्तं कृत्वा ततो मध्येपृष्ठ्यांश्चतुरो मासा-नुपेयुः क्रमेण ।

१३. द्वादशे मासे मध्येपृष्ठ्यौ द्वावभिप्लवौ कुर्वन्ति ।

१४. मध्येपृष्ठ्ययोरभिप्लवयोरन्तरे गोआयुषी उपेतव्ये ।

१५. छन्दोमदशाह इति शाखान्तरे विशिष्टस्य दशाह-स्याख्या । छन्दोमरूपो वा दशाहश्छन्दोमदशाहः । बृहद्रथन्तर-पृष्ठ्याकृष्यात्[1] । तं छन्दोमदशाहं गोआयुर्भ्यामनन्तरमुपयन्ति[2] ।

---

## २२.

१. अङ्गिरसामयनाख्ये संवत्सरसत्त्रे विधिं वक्ष्याम इति वाक्यशेषः ।

२. अभिप्लवास्त्रिवृत्स्तोमकाः ।

३. प्राग्विषुवतः पटलं पूर्वं पटलं । तस्मिन्पृष्ठ्यारम्भणान्मासानु-पयन्ति ।

४. पृष्ठ्योदयात्पृष्ठ्यान्तानिति यावत् ।

५. यथोद्दिष्टेन क्रमेण ।

६. अभिजितः स्थाने बृहस्पतिसवमिन्द्रस्तोमं (२१. ६) विश्व-जित इत्येवमादि ।

---

१ not quite legible in A; M ष्ठमा - - यात् । २ A om. चयन्तरम् C वाकयात् alt. to वाकयात् D वाकयात् ।

## २३.

१. दृतिवातवतोरयनाख्ये संवत्सरसत्रे वक्ष्यमाणको विधिः।

२. पृष्ठ्यस्तोमानां त्रिवृदादीनामेकैकेन मासंमासमुपेयुः।

३. विषुवतः स्थाने महाव्रतं भवति।

४. [1]आवृत्तानां त्रयस्त्रिंशादारभ्य प्रातिलोम्येन पृष्ठ्यस्तोमाना-मेकैकेन मासमुपेयुः।

५. सर्पसत्रं वक्तुमारभ्यते[2]। तत्रातिरात्रावभितः। सर्पसत्र-विशेषणमेतत्।

६. सर्पसत्रस्य मध्ये सर्वं एवाग्निष्टोमसंस्था दिवसाः।

७. दशकाः स्तोमाः प्रत्यहमस्य सन्तीति दशदशी। ईदृशः संवत्सरः सहातिरात्राभ्याम्।

८. द्वादशकाः स्तोमा अस्येति [3]द्वादशीको ऽसौ विषुवान्सर्प-सत्रस्यायं विधिः। गवामयनमेवैतत् स्तोमसंस्थाविशिष्टमिति गवा-मयनं वाभिगरश्रुतेरिति तत्र (२४. ४. ४९) कात्यायनस्य।

---

## २४.

१. कौण्डपायिनामयनं नाम संवत्सरसत्रं। तस्य माससंमिता दीक्षाः। दीक्षानियमैर्मासं व्याप्नुयुरित्यर्थः। अवसथकाः कुण्डप्रति-रूपास्वमसास्तैः[4] पीयते सोम इति यागाख्या[5]।

---

१ C D चावृत्तपृष्ठ्यस्तोमानामेकैकेन मासंमासमुपेयुः। २ C D M सर्पसत्रं च तत्क्रमारभ्यते। ३ A C M (orig.) D (?) द्वादशौको। ४ A (orig.) चसथ, in marg. तृ C चसथपशानि; in marg. क instead of प D चसथकपकुण्डप्राति॰ M चसथकाः कुण्डप्रतिरूपाः चमसास्तैः। ५ C पीता॰ M योग्या॰।

२. क्रीत्वा सोमं राजानमुपनह्येति वाचनिकमेतदुपनद्धस्यो-पनहनम्। तस्योपसद उपेत्य कर्तव्यं। तथा च सुत्याकालमुप-सद्भिश्चरित्वा सोममुपनह्य सुत्याकालेषु मासमग्निहोत्रं जुहोति (का० २४.४.२४)। तन्त्रवत्सायंप्रातर्होमक्रमतो[१] द्वादशाहं भवति (?)।

३. दर्शपूर्णमासकर्मभ्यामेकतन्त्रक्रियया मासमुपेयुः। तन्त्रेण वा समस्तचोदितत्वात् अग्निहोत्रं चेति (२८. २९) कात्यायनस्य।

४. चातुर्मास्यपर्वणां वैश्वदेवप्रभृतीनां चतुर्णां एकैकेन मासं-मासमुपेयुः।

५. चित्या मासमुपेयुः। पञ्चदशेन मासं। सप्तदशेन मासं। एकविंशेन मासं। त्रिणवेन मासमिति।

६. उत्तमे मासे ऽयं विधिः। षष्टाद्शाहं षर्त्रिंशस्तोमे-नोपेयुः।

७. षष्टाद्शाहानन्तरं दशरात्रं ततो महाव्रतं ततो ऽति-रात्रम्। इतिकरणाच्च प्रायणीयः।

*८. यो होतुश्च कर्ता चोदनामात्रः सो ऽध्वर्युः स पोतेति[२] स एवाध्वर्यवपोत्रीये कुर्यात्।

९. यो मैत्रावरुणपदार्थे[३] प्रवृत्तः स एव ब्रह्मत्वप्रतिपत्त्ये[४] कुर्यात्।

---

१ A होत्रं क्रमतो द्वादशाहं भवति C सोमक्रमतो द्वादशा० M सन्नं सः सार्वप्रातर्होमक्रमतो द्वाद्श मा०। २ C D M om. स पोता। ३ C D M ०पदार्थे। ४ C ०त्वं D प्रतिपत्त्यं M ०पत्ते A om. स।

१०. य औद्गात्रस्तस्य नेष्टाच्छावाकीये कुर्यात्।

११. यः प्रस्तोत्राख्यः स ब्राह्मणाच्छंसिपावस्तोमिये कुर्यात्।

१२. यः प्रतिप्रस्थातोच्यते स आग्नीध्रोन्नेतृत्वे कुर्यात्। एवमेते पञ्च स्थानीतराणि च कुर्युः।

१३. यः सुब्रह्मण्यः स सुब्रह्मण्य एव।

१४. गृहपतिरपि स्वकर्मैव कुर्यात्। परिसङ्ख्यासङ्ख्यायां[1] द्वयोरनुवादः।

१५. देशो होतृषदनाहवनीयसमीपादिः। कालो निमेष-क्षणाद्युपलक्षितः। स च यज्ञे प्रयुज्यते अस्मिन्काल एतत्कुर्यादिति। तद्यथा वषट्कृते जुहोति वषट्करोतीत्यादि। देशश्च कालश्च देश-कालौ। तौ च व्यवस्थितौ क्रियाङ्गत्वेन क्रियाभेदाच्च भिन्नौ। तत्र कर्तृभेदे[2] प्रकृतिवदनुष्ठानं शक्यमेव[3]। इहैकस्य कर्तुरनेकक्रियोपदेशे तत्सत्संबद्धयोर्देशकालयोः संनिकर्षेणोपनिपाते[4] अनियमकारिणः शास्त्रस्याभावादिति प्राप्त आह। अत्रैदेशाप्रधानस्य[5] वशं नयेत्। होत्रादेरयमुपदेशः। तत्र क्रियाविशेषयौगपद्येनासंभाव्यदेशकाले सत्त्व-मप्रधानस्य मैत्रावरुणादेर्वशं नयेत्[6]। तदापन्नं कर्तृत्वं[7] कुर्यात् इत्यर्थः। आत्मीयं[8] मैत्रावरुणादेः समर्थ्यं[9] स्वयमाध्वर्यवादि कुर्यात्। तस्य प्रत्यक्षत्वात्। अप्रधानस्य वशमनया व्यवस्थया नयेत्। कथा। उच्यते।

---

[1] C D परिसङ्ख्यायां। [2] C D प्रकृतिवत्। [3] A वाक्यमेव। [4] A •कर्षेणो•। [5] C D •देशा अप्र•। [6] C D om. the words from तत्र क्रिया• to नयेत्। [7] A तदापन्नं तत्कर्तृत्वं C तदापन्नं तत्कर्तृत्वं DM तदापन्नं तत्कर्तृत्वं। [8] A आत्मीय C M •यं। [9] A समर्थ्य C मैत्रावरुणादेरसमर्थे। M मैत्रावरुणादेरसमर्थे।

अवैदेश्या। विदेशे भवं वैदेश्यम्[1]। न विद्यते वैदेश्यमस्यां व्यवस्थायामिति सा व्यवस्था अवैदेशी। ईकारेण स्त्रीप्रत्ययेन। अतस्तथा युक्तं भवति। मैत्रावरुणादिहौत्रं[2] कुर्यात्। होतृपदेन एव कुर्यान्न[3] विदेशे। अथोदाहरणम्। परिव्ययणीयां मैत्रावरुणो ब्रूयात्। यूपानां परिव्ययणं होता कुर्यात्। विप्रतिषिद्धकरणसमवायादिति[4]। तथा[5] इतरमन्यत्तेषां यतो विशेषः स्यादिति मीमांसकाः।

१६. गत्वागत्वा यथादेशमितराणि पोत्राच्छावाकनेष्ट्रादिधिष्ण्यानि मुख्यासनसंबन्धीनि[6] कर्माणि कुर्युः। तथा च कात्यायनः। मुख्यासनेभ्यो ऽनुप्रसर्पन्तितराणीति (२४. ४. ४७)।

१७. एकाहस्तुतिशमभिजिद्विश्वजिद्विषुवन्महाव्रतादिः। तत्संघातः समानजातीयसमुदायः। तत्रैकाहस्तुतिशमित्येवमादिरहः-संघातमापद्यमानः समुदायं प्रविशन् वक्ष्यमाणानि तायमानरूपाणि लभेत। परिभाषाप्रसङ्गेनेदमारभ्यम्।

१८. संघाताः पृष्ठ्याभिप्लवच्छन्दोमस्वरसामप्रभृतयस्तेषु भवं सांघातिकमहः। तद्यदेकाहीभवतीति[7] ततस्तस्मात्तायमानरूपाणि निवर्तेरन् न भवन्ति इत्यर्थः।

१९. अयं यज्ञ इति याज्या हारियोजनस्य। इह मद एव[8] मघवन्नित्यतिशेषः। सह पुरोनुवाक्यया परा याहीत्येतयाङ्गभूतया[9]।

---

१ A (by alt.) उच्यते विदेशस्य भाव वैदेश्यं M विदेशभावो। २ A M ०वादिहौत्रं कुर्यात् CD ०हिर्वोत्रं। ३ C कुर्यान्न विदेशे। ४ A ०षिद्ध करणं। ५ A ins. क्षेत्र। ६ CD मुख्यासं०। ७ CD तेष्वस्येकाहिको भवति A तद्यदे०। ८ CD om. एव। ९ CDM चाङ्गभूतया।

प्रैषस्य पुरोनुवाक्यापदत्वं प्राधान्यार्थम्[1]। तेनाग्निष्टुति श्वोभूत आग्नेयी कर्तव्या श्वःस्तोत्रिया। अनुरूपाः श्वःस्तोत्रिया इति (१२. २. १) ये उक्ता होत्रकाणां कल्पाः कर्तव्याः। तद्यथा। यदिन्द्र नाहुषीष्वेति तृतीयः। आकरं मैत्रावरुणस्येत्यच्छावाकस्य च संभवः। उक्थमुक्थी-यासु। अप प्राचो अस्मणा ते उरं नः। अभि तष्टेव दीधया मनीषा-मित्यभितष्टीयमित्येतानि तायमानरूपाण्युच्यन्ते। संज्ञाकरणं शास्त्र-संव्यवहारार्थम्। नित्यमेतत्प्राग्गुक्तमादङ्गो ऽन्तरेण प्रायणीयोदयनी-यावित्यादिभिः सिद्धे (१२. ६. १) पुनर्वचनमहादशाहविकारा-र्थम्। प्रसङ्गेन परिभाषां कृत्वा कौण्डपायिनामयनस्य यदन्यत्तदाह।

१०. यद्यपि कौण्डपायिनामयने संपूर्णो विधिस्तथाप्यभीवर्ता-न्यायातनमहःसंस्थादियोगो गवामयनस्यैव यः स एव ग्रहीतव्यः। एवशब्दो नाम मध्ये प्रयुक्त एकदेशस्यापि संज्ञाज्ञापनार्थः। तथा च जैमिनिः। गव्यस्य च तदादिष्वादित्याह[2]।

---

## २५.

१. उपेयुरिति वाक्यशेषः।

२. चतुर एव मासानुपसद उपेयुः।

३. चतुर एव मासान् सुन्वन्तीति[3] सुत्याभिर्व्याप्नुवन्ति।

---

१ G (orig.), D भाव्यार्थं C (sec. h.) प्रधान्यार्थं M प्राधान्यार्थं A प्राधान्यार्थं।

२ C तदादिष्वित्यादि (in marg. °त्यादि) D तदादिष्वित्यादि M तदादिष्वित्यादिष्वेत्यादि।

३ C D M om. इति।

४. याद्दृशौ गवामयनस्य प्रथमोत्तमौ मासौ ताद्दृशावस्यापि भवतः।

५. षडहात् गवामयनवत्।

६. गवामयनवत्[1]।

७. तदेतत्संवत्सरसत्रं चतुरो मासानित्यत आरभ्य क्षुल्लकतापश्चितमित्याचक्षते। प्रसिद्धा दीक्षमस्य संज्ञेत्यभिप्रायः।

---

## २६.

१. तापश्चितं दीक्षासंवत्सरमिति च कात्यायनः (२४.४.१)।

२. उपसदो ऽपि[2] तापश्चितः संवत्सरमेव भवेयुः।

३. सुत्याभिरपि संवत्सरं व्याप्नुवन्ति। इतिकरणः परिमाणार्थः।

४. तद्वा सर्वेषामा दीक्षादेः कस्य निर्देशः। तदेतत्तापश्चितं नाम प्रसिद्धम्।

---

## २७.

१. दीक्षानियमा महातापश्चिते संवत्सरत्रयं कार्याः।

२. संवत्सरानेव प्रकृतत्वात्।

३. त्रीन् संवत्सरान् सुत्याभिर्व्याप्नुवन्ति।

---

१ In A the words त्रिपुषांस form one Sūtra and are explained by गवामयनवत्। This is probably more correct than the reading of C D which unites both words with the following Sūtra.

२ C D उपसिनो ऽपि।

४. इति यदुक्तं तन्महातापश्चितं नाम सत्रम्।

५. सर्वस्मिन्नेव बहुसंवत्सरे गवामयनस्याभ्यासः कार्यः।

६. संहार्या मासाः प्रथमषष्ठसप्तमोत्तमा एकादशानां[1] संहारात्। तान् संहार्यान् परिहाप्य गवामयनाभ्यासो बहुसंवत्सरे वा भवति। सकलस्य गवामयनस्य[2]।

७. अतिरात्रसंस्थं प्रथममहस्ततः सहस्रसंख्यान्यहानि छन्दोगवशेन। ततोऽतिरात्र इत्येतदग्नेः सहस्रसाध्यमित्येवंसंज्ञकं सत्रम्।

---

## २८.

१. त्रिसांवत्सराख्यं सत्रमुच्यते। तस्य गवामयनं प्रथमः संवत्सरः।

२. अथशब्दः क्रमनियमार्थः। आदित्यानामयनमपि संवत्सरमनुषङ्गात्।

३. अङ्गिरसामयनमपि संवत्सरं भवतीत्यर्थोऽथशब्द इत्युक्तम्।

४. त्रिसांवत्सरं नाम सत्रं प्रजातिकामानां[3] सत्रिणां भवति।

५. [4]प्रजापतेर्द्वादशसंवत्सरमित्यनयाख्यया द्वादशसंवत्सरं सत्रम्। तत्र त्रिप्रभृतीनां चतुर्णां पृष्ठ्यस्तोमानां त्रिवृत्पञ्चदशसप्तदशैकविंशानामेकैकेन त्रींस्त्रीन् संवत्सरानुपेयुः।

६. शाक्तानां षट्त्रिंशत्संवत्सरप्रसिद्धाख्यमेतत्[5] सत्रं। तत्रैतेषामेव त्रिवृदादीनामेकैकेन नव नव संवत्सरानुपेयुः।

---

१ M एकानां। २ A ins. वा। ३ C D प्रजापति°। ४ As far as उपेयुः in A om. ५ C D om. एतत्।

७. एतेषामेव चतुर्णां त्रिवृदादीनां पृष्ठ्यस्तोमानामेकैकेन पञ्चविंशतिःपञ्चविंशतिः संवत्सरानुपेयुः । तेन साध्यानां शतसंवत्सरमित्येवंनाम सत्रम् ।

८. तथा च पञ्च पञ्चाशतः संवत्सरान् त्रिवृतः पञ्च पञ्चाशतः संवत्सरान्पञ्चदशाः[1] पञ्च पञ्चाशतः संवत्सरान् सप्तदशाः पञ्च पञ्चाशतः संवत्सरानेकविंशाः । पञ्चपञ्चेति वीप्सा चतुर्णां व्याप्त्यर्था । [2]इत्येतद्विश्वसृजां सहस्रसंवत्सरमित्युच्यते ।

---

## २९.

१. सरस्वत्या विनशनं प्रसिद्धं । तत्र दीक्षा सारस्वतानां सत्राणाम् ।

२. दीक्षानन्तरं[3] प्राकृतक्रमेण सोमं क्रीत्वोपनह्यातिथ्यान्ते पुनर्वचनात् । तत उपसद उपेत्य क्रमार्थो निर्देशः ।

३. उपसदनन्तरं प्रायणीयमतिरात्रं कुर्युः । तथा च कात्यायनः । सरस्वतीविनशने द्वादशाहवद्दीक्षोपसदौ तत्रैव प्रायणीयोऽतिरात्रः सांनाय्यं चेति (२४.५.२१.२२) ।

४. सांनाय्येनामावास्येनेष्ट्वा यूपदेशे स्थिताध्वर्युः शम्यां परास्य । शम्या प्रसिद्धा याज्ञिकानाम् ।

५. तत्र शम्यापाते गार्हपत्यं निदध्यात् ।

६. षट्त्रिंशत्प्रक्रमा यस्मिन्पूर्वान्ते गार्हपत्यात्स षट्त्रिंशत्प्रक्रमो

---

1 In C D from पञ्चदशाः to संवत्सरान् om. 2 C D ins. पञ्चपञ्चाशतः पञ्चदशाः ॥ संवत्सरान् । 3 A उपसदनन्तरं ।

दिशः। अवयवापेक्षं[1] बहुवचनं। तेषु षट्त्रिंशत्संवत्सरेषु आहवनीय-मध्यादधाति स्थापयतीत्यर्थः।

७. सदो यज्ञागारं चक्रीवदाकारं भवति[2]।

८. आग्नीध्रमप्यागारं तथैव चक्रीवदाकारं[3] भवति।

९. उलूखलबुध्नाकारो यूपो भवति।

१०. अक्षातालुपरवान् कुर्वन्ति।

११. योयो ऽपूर्यमाणपक्षस्तमेतममावास्येन कर्मणा प्रत्या-याते ऽभ्यसन्तो[4] यन्ति।

१२. तेषामेवं गच्छतां क्रमप्राप्तायां पौर्णमास्यां गौःसंज्ञक[5] उक्थ्यसंस्थो बृहत्सामा भवति।

१३. योयो ऽपचीयमाणपक्षस्तमेतं पौर्णमास्येन कर्मणा यन्ति सत्रिणः।

१४. तेषां सत्रिणाममावास्यायां क्रमेणागतायामायुःसंज्ञक उक्थ्यसंस्थो रथन्तरसामा भवति।

१५. प्रतीपमनार्जवं[6] पूर्वेण पथा सह यजमाना यन्ति।

१६. अपोनप्त्रा देवता। अत्र सो ऽयमपोनप्त्रीयश्चरुः। तं निरूप्य वक्ष्यमाणदृग्द्वयमध्यये।

१७. तद्यानीकमुत चाह नामेति पुरोनुवाक्या। अस्मिन्पदे परमे तस्थिवांसमिति याज्या। अपोनप्त्रीयस्येति वचनात्। येषां विष्णुस्विनामपांनप्त्रीयस्यैते न भवतः[7]।

---

1 C D अवयवा॰। 2 C D तथाचक्रीवदाकारं। 3 C D चक्रीवदाकारं।
4 A ॰भ्यसन्ती। 5 A C D तौ; M om. 6 C यामार्जं॰ A अनार्जवपूर्व॰
7 A ॰नामपांनप्त्रीयस्यैते।

१८. दृषद्वती प्रसिद्धा। तदप्ययो देशविशेषः। तस्मिन्नपोनप्त्रियश्चरुः।

१९. निरुप्येति क्रमार्थः प्रत्ययो ऽनुवर्तते। अपोनप्त्रिययागाद-नन्तरं दृषद्वत्यप्ययात् सरस्वतीमपि यन्ति। सरस्वतीमप्येते यन्ति[१]। अपिशब्दात्प्रतिषिद्धामप्यवभृथे। तथा च कात्यायनः। नावभृथं सरस्वत्यामित्याह (२४. ६. २२)।

२०. शतसङ्ख्यासु गोषु गर्भिणीषु शाखान्तरात्। वृषभमप्यु-त्सृजन्ति। गोमण्डल एवोत्सृजेयुर्दीक्षाकाले।

२१. यदैवैतच्छतं गोरूपाणां सहस्रं संपद्यते तदैवोत्थानमथ-शब्दात्।

२२. तेषु गोरूपेषु मृतेषु वा सत्रोत्थानं भवति। वाशब्दो विकल्पार्थः।

२३. सत्रोत्थानं वा[२] भवति।

२४. अथमपर उत्थानपक्षः। शम्याप्रासेन गच्छन्तः प्लाक्षं प्रस्रवणं प्राप्य तस्मिन्नेवाग्नये कामायेष्टिं निर्वपेयुः। प्लाक्षः[३] प्रस्रवणो लोकप्रसिद्धः।

२५. या अग्नये कामायेष्टिस्तस्यां समाम्नायां सत्यां न तु तदर्थं ते[४]। अतस्तान्यस्मा अनृत्विजे दानम्। अश्वां च वडवां। पौरुषीं च मानुषीं। धेनुके प्रत्ययप्रसवे। केन[५] प्रयोगादनुकम्पिते

---

१ A om. these four words. २ C D om. वा। ३ C om. ः।
४ C D (?) M om. समाम्नायां। ५ A क प्रयोगादनुकम्पिते पशिपशेन।

अग्निप्रस्रवणेन। कारपचवं नाम प्रसिद्धं। तं प्रति यमुनामवभृथमभ्यवयन्ति।

२६. यदेतदुक्तं सारस्वतमेतन्मित्रावरुणयोरयनं नाम सत्रम्।

२७. आद्यन्तयोरिष्टातिरात्रवचनात्। पूर्वस्मिन्नेतौ स्तः। अभिजिद्विश्वजितौ व्यस्तौ संवत्सरं भवतः। शुक्ले ऽभिजित् कृष्णे विश्वजित्। इन्द्रकुक्षी उत्तरे पौर्णमास्यामावास्ये उच्येते। तत्र गोआयुषी व्यस्ते भवतः। एकस्यां गौरपरस्यामायुः। उभा कुक्षी ऋषतां वार्षघ्नं च माघोनं चेन्द्रकुक्ष्योः प्रैषलिङ्गम्[1]।

२८. इत्येतत्सत्रं सारस्वतमिन्द्राग्न्योरित्येवंसंज्ञकम्।

२९. आद्यन्तयोरतिरात्रौ मध्ये ज्योतिर्गौरायुरित्येतान्यहानि दण्डकलितवदावर्तेरन्। विश्वजिदभिजिताविन्द्रकुक्षी। विश्वजिदेकस्यामभिजिदपरस्याम्। एतत्सारस्वतमर्यम्णः समाख्यातम्।

३०. संवत्सरं दृषद्वत्या एव समीपे ब्राह्मणस्य गा रक्षेत्। ऋत्विज आचार्यस्य चेति छन्दोगानाम्। तेन यथैव तेषां वासस्तथैव गा रक्षेत्।

३१. व्यर्णो नैतंधवो लोकप्रसिद्धः। तस्मिन्प्रज्वलितमग्निं धारयेदपरं संवत्सरम्।

३२. तृतीये संवत्सरे एतत्कर्म। अग्न्याधानं परीणहि स्थाने दर्शपूर्णमासारम्भं कृत्वा सरस्वतीदृषद्वतीसंगमात्प्रत्यङ् दृषद्वत्या दक्षिणेन तीरेणाग्नेयेनाष्टाकपालेन पुरोडाशेन शम्यापराव्येशम्यापराव्ये यजमानो ऽवभृथप्रदेशमेति।

---

[1] A प्रैषे।

३३. [[1]प्लक्षात् जनपदं प्राप्य तत्रैव यमुनायामवभृथार्थं गच्छन्तीत्यर्थः] प्लक्षाख्यं तीर्थं यमुनां प्रति तामवभृथमभ्यवैति।

३४. दार्षद्वतं दृषद्वत्यां भवं[2]। संवत्सरं ब्राह्मणस्य गा रक्षेदित्येवमारभ्य यदुक्तं संवत्सरत्रयमेतत् दार्षद्वतं नाम सत्रं एकाकिनो ऽप्येतद्भवति। यजमानशब्दात्।

३५. आदावतिरात्रस्ततस्त्रिवृत्स्तोमकाः संवत्सराः सहस्रसङ्ख्याकास्तेषां रूपं पूर्वकारिवशात् ज्ञेयम्। अभ्यासो बहुसंवत्सरे गवामयनस्येति (१३. २७. ५) सूत्राख्योक्तं। तेन वा संवत्सरसहस्रपूरणं। ततो ऽतिरात्रः। एतत् प्रजापतेः सहस्रसंवत्सरसत्रम्[3]। द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति।

इति शाङ्खायनश्रौतसूत्रभाष्ये त्रयोदशो ऽध्यायः समाप्तः॥

---

[1] C D M have only चिःप्लक्षाख्यं तीर्थं। यमुनां प्रति तामवभृथमभ्यवैति (C चित्रं॰ M चित्र) and om. the words from प्लक्षात् to र्थः A om. both, text and Comm., and gives the reading quoted above in marg. In the text of the Sûtra I beg to read चिःप्ल॰। [2] C (orig.) D दार्षद्वतं three times (once in the text and twice in the Comm.); we should expect दार्षद्वतं A om. text and Comm.

[3] C D M ॰संवत्सरं।

# अथ चतुर्दशोऽध्यायः[१]।

## १.

१. व्याख्यातो द्वादशाहः प्रकृतिः सत्त्राहीनानामित्युक्तम्। उद्देशक्रमेण सत्त्राण्युक्तानि। अथेदानीमहीनानामवसरस्तथैकोत्तराणां धर्मविशेषात्पृथग्भूतानामुत्तरच वचनमितरेषां केषांचिदेकाहैः सह[२] धर्मसामान्यादिहानुक्रमणं[३] न्याय्यं। तदर्थमाह। एकाहेषु एकस्तुत्येषु क्रतुषु अहीनेषु द्व्यहप्रभृतिषु यो विकार उच्यते स प्रकृतेरग्निष्टोमस्य विकारः प्रत्येतव्यः। न ह्येकाहा अग्निष्टोमधर्मका एव। तेषां हि वचनेन अहीनानां द्वादशाहविकाराणामुपदेशविरोधः उच्यते। द्वादशाहिकस्याङ्ग एकाहेति संदिश्यमानस्य[४] द्वादशाह-धर्माः प्राप्नुवन्ति। समुदायकानां धर्माणामवयवे[५] ऽभिसंभवात्। तेन द्वादश दीक्षा द्वादशोपसद् आग्नेयामनिर्वचनं नामधेया-ग्रहणमित्येवमादयः प्राप्नुवन्ति। तन्निवृत्त्यर्थमेकाहेषु प्रकृतेर्विकार-वचनम्। यद्येवं व्याख्यातो ऽग्निष्टोमः प्रकृतिर्द्वादशाहस्यैकाहानां चेत्येतस्यैकाहवचनस्य किं प्रयोजनमिति। उच्यते। धर्मप्रवृत्त्यर्थमेत-द्वचनं चतुर्विंशमहाव्रतादिषु। इतरस्तु द्वादशाहिकानां समुदाय-

[१] C D ins. षडक्षोत्तरापेक्षा। [२] A सर्वे instead of सह। [३] C D इहान्यनु०। [४] C D ०ह०। [५] C D कर्माणामवयवेति समवाप्। in marg. भि।

धर्माणामन्वये ऽपि संभवात् तन्निवृत्त्यर्थमेकाहेष्विति। अहीनेषु चेत्यहीनानामग्निष्टोमस्य प्रकृतिर्द्वादशाहस्य कथं नाम स्याताम्। एकोत्तराणां तु मासापवर्गा अहीना (१६.२०.८) इत्येवमादिकं धर्मजातमुपरिष्टाद्वक्ष्यामः।

२. इममेकादशयोरध्याययोरुपदेशातिदेशौ प्रायेण परिभाषितत्वात् होतुरेव। द्वादशाध्याये प्रकरणं[1] होत्रकाणामेव। तस्य समुदितस्य प्रदेशार्था परिभाषा। यस्मिन्नहनि यस्मिन्क्रतौ धनजिदादौ यदहस्तुर्विंशादि प्रदिश्येत[2] सवनं वानुचरप्रभृति षष्ठात्तृतीयसवनमित्येवमादिनातिदेशेन (११.१५.७) सर्वं[3] तत्सह होत्रादिभिस्तद्भवतीति वेदितव्यम्।

३. अहीनानामुभयप्रकृतित्वात् विकल्पे प्राप्ते नियमः। ऐकाहिकमेवानादेशे भवति। न विकल्पः।

---

## २.

१. अग्न्याधेयो नाम हविर्यज्ञसोमः। तेन ब्रह्मवर्चसकामो यजेत। अग्न्याधेयसोमयागेन ब्रह्मवर्चसं साधयेदित्यर्थः। अपरे यजेतेत्यतिरेकं मन्यमाना आर्त्विज्यप्रतिषेधमेवमादिषु काम्येषु मन्यन्ते। प्रतिषेधे ऽपि आपद्गतस्य पुत्रदारात्यये[4] प्रवृत्तिः।

२. तस्याग्न्याधेयसोमस्य स्तोत्राण्यष्टाचत्वारिंशत्स्तोत्रियासु भवन्ति।

---

१ C D प्रकरणात्। २ C प्रदिश्यते। ३ र्वं seems doubtful. ४ C (orig.) पुत्रदारात्ययो।

३. ननु स्वरूपमात्रकथनमेतन्नागमस्य विषयः। उच्यते। अर्थवादो ऽयं विध्यादेशस्य स्तावकः। न त्वाम्नायगतस्य मतिरेषा[1] न पौरुषेयस्य कल्पस्य। एवं तर्ह्यनुब्राह्मणमेतन्महाकौषीतकादाहृतं कल्पकारेणाध्यायनयं[2]। कथं नाम[3] नैतद्ब्राह्मणमनुष्ठीयमानं कर्माकर्मविशिष्टफलदानसमर्थं[4] स्यादिति। अष्टाक्षरा गायत्री। अष्टाक्षरेत्युक्ता।

४. भक्तिवादो ऽयम्।

५. तस्याग्न्याधेयसोमस्य रथन्तरं पृष्ठं भवति। तत्रार्थवादः[5]।

६. भक्तिमात्रपर्यात्।

७. संख्यानियमार्थं वचनम्।

८. केनचिद्गुणसामान्येन।

९. गायत्रीरथन्तराग्निष्टोमाख्येन त्रिःसमृद्धेन ब्रह्मणा तेजो ब्रह्मवर्चसमाप्नोति। तस्मादेवं कर्त्तव्यम्।

१०. अग्न्याधेयाख्ये हविर्यज्ञसोमे ह्यवक्लृप्तं शस्त्रं कार्यम्।

११. यथोद्दिष्टस्य त्रिवृतो ऽन्नाद्यस्य प्राप्तये कर्तव्यमेवार्थवादो ऽयं न फलविधिः।

१२. गवामिवं सङ्ख्या न्यायात्।

१३. इति स्वरूपमेतत्। संवत्सरस्यैवाप्त्या इति च फलार्थवादः। उभयमेतत् स्तुत्यर्थम्।

१४. तस्येति स्तुत्यर्थो निर्देशः। अग्नये पवमानायेत्येवंदेवत्य

---

१ A om. न। २ A नयं C D(?) नये M नयः। ३ A om. न।
४ A om. चकर्म। ५ C D वादाः।

एकः पशुः। तथाग्नये पावकाय तथाग्नये शुचय इत्यग्निपदानुषङ्गात्। इतिवचनमेवं स्वशाखायां[१]। पूर्वकारिवशात्त्वन्यथापि भवति। सवनीयमन्वालभ्या एते पशवः। नैकेषां[२] पशुपुरोळाशो भवति। ततस्तत्सूक्तैभिर्ऋग्भिः प्रयोजनं। तत्र हविषो विहिता एव। यदि तु पूर्वकारिवशात् पशुपुरोळाशो भवति ततः षड्भिः प्रयोजनं। अग्निर्ऋषिः पवमान इत्येका। यत्ते पवित्रमर्चिषीति पञ्च। एता अग्नये पवमानाय। अस्याजरासो दमामरित्रा इत्येका। उशिक् पावको अरतिः सुमेधा इत्येका। वयं ते अग्न उक्थैर्विधेमेत्येका। समिध्यमानः प्रथमानु धर्मेत्येका। स श्वितानास्तन्यतू रोचनस्था इत्येका। विशां कविं विश्पतिं शश्वतीनामित्येका। इत्यग्नये पावकाय। वि ते विष्वग्वातजूतासो अग्न इत्येका। यदीं गणस्य रशनामजीगरित्येका। तिस्रो यदग्ने शरदस्त्वामिदित्येका। विशां कविं विश्पतिं मानुषाणामित्येका। उच्छोचिषा सहसस्पुत्र स्तुत इत्येका। चिरस्य ता परमा सन्ति सत्येत्येका। इत्यग्नये शुचये।

१५. अदितिदेवत्या वशा वन्ध्यानूबन्ध्यायाः स्थाने उपालभ्या[३]। एवंविधाशब्दो विधिवचनः। एष एव विधिरित्यर्थः। ततो न पयस्यापक्षे। एवंविधेति वचनात् पयस्यापक्षे पयस्यैव। अस्या याज्यानुवाक्यापङ्क्तिः। उत त्वामदिते महीति तिस्रः। महीमू षु मातरं सुव्रतानामित्येका। सुत्रामाणं पृथिवीं द्यामनेहसमित्येका। अदितिर्द्यौरदितिरन्तरिक्षमित्येकेति।

---

१ A ०शाखायां। २ C D M om. षां C D M पुरोळाशा न भवन्ति।
३ C D उपालभ्या।

१६. तथदित्युद्देशप्रतिनिर्देशौ। एवमिति प्रकारवचनं। यदेवं पशवो नियुक्ता भवन्ति तदेतत्करोमि नैवाग्न्याधेयात्कर्मणो ऽग्नीन् अन्यत्रापगच्छामि। एवंकृते ऽग्न्याधेयादनपगमः कृतः स्यादग्नेरित्यभिप्रायः।

१७. तस्याग्न्याधेयसोमस्य[१] प्रातःसवनीयपुरोळाशानन्तरं अग्नये पवमानायाष्टाकपालं पुरोळाशं निर्वपेत्।

१८. अग्नये पावकायाष्टाकपालं पुरोळाशं निर्वपेत्।[२]

१९. तृतीयसवनीयान् सवनीयपुरोळाशानन्वग्नये शुचये ऽष्टाकपालं पुरोळाशं निर्वपेत्।

२०. वैशब्दो हेत्वर्थे। यतः कारणात् सवनीयपुरोळाशस्य विधानावापोद्धापस्तत एतदुच्यते। आवपनं वै सवनीयाः पुरोळाशाः।

२१. उप्यते एष्वित्यावपनं। दृष्टेष्वेव प्रकृतेषु स्थानेष्वावपन एव[३] तदावपतीति।

२२. अर्थवादार्थः पुनरुपन्यासः।

२३. वैशब्दो हेत्वर्थः। यस्माददितिमनु समाप्यते ऽग्न्याधेयं तस्मात्काम सामान्येनेहापि तथैव करोति।

२४. नु इत्यवधारणे। यैवाग्न्याधेयस्य संस्था तादृशीमेवात्रापि करोति।

---

१ C D M ०धेयस्य। २ A M add आवपनं वै गेहु। ३ A एवं।

## ३.

१. एवमिति प्रकारवचनः। एवमनेन प्रकारेण[१] हविर्यज्ञेषु सोमेषु पशवः पुरोळाशाश्चाम्नायात्यन्ते हविर्यज्ञाख्येषु सोमेषु।

२. तथेति प्रक्रान्तस्य प्रतिदेशेषु शस्त्रं। तथेत्यवधारणार्थः। अतस्तस्य न ज्योतिष्टोमिकं विकल्पेन। शस्त्रं वक्ष्यमाणं। अधिकारश्चायं। तेनैतदुत्तरमतिदेशेषु शस्त्रमेवातिदिश्यते।

३. यद्वाहिष्ठं तदग्नय इत्येतत्तृचमाज्यं भवति।

४. अन्यत्रापि तृचक्रमः सकल एव।

५. ऐकाहिकानां यथाप्राप्तानां परिसंख्यानार्थं वचनम्।

६. इन्द्र मरुत्व इह पाहि सोममित्येवमादिकं तृचं मरुत्वतीयं भवति। प्राकृतस्य निवृत्तिः परिसंख्यानात्। एकां शस्त्वा निवित्परिभाषितत्वात्।

७. नृणामु त्वेत्येवमादिकं तृचं निष्केवल्यं कार्यम्[२]।

८. अध्वर्यो वीरेत्येवमादिकं[३] तृचं मैत्रावरुणस्योक्थमुखीयं भवति।

९. अध्वर्यो वीरेत्येतस्मात्पूर्वं तृचमिन्द्र तुभ्यमिन्मघवन्नभूमेत्येतद्ब्राह्मणाच्छंसिन उक्थमुखीयं भवति।

१०. उत्तरं तृचमिदं त्यत्पात्रमिन्द्रपानमित्येतदुक्थमुखीयमच्छावाकाय भवति।

---

१ C D स्तेन A ins. एव।  २ A om. कार्यम् C D om. अर्थं।
३ A वीर प्र महे सुतानामिति।

